# शारदीय नवरात्र

## [ आश्विन शुक्ल प्रतिपदासे नवमीतक ]



आश्विनशुक्लकी प्रतिपदासे नवमी तिथितक नवरात्रव्रत होता है। नवरात्र मुख्यरूपसे दो होते हैं—वासन्तिक और शारदीय। वासन्तिकमें विष्णुकी उपासनाका प्राधान्य रहता है और शारदीयमें शक्तिकी उपासनाका। वस्तुतः दोनों नवरात्र मुख्य एवं व्यापक हैं और दोनोमें दोनोकी उपासना उचित है। आस्तिक जनता दोनोंकी उपासना करती है। इस उपासनामें वर्ण, जातिका वैशिष्ट्य अपेक्षित नहीं है, अतः सभी वर्ण एवं जातिके लोग अपने इष्टदेवकी उपासना करते हैं। देवीकी उपासना व्यापक है।

दुर्गापूजक प्रतिपदासे नवमीतक व्रत रहते हैं। कुछ लोग अन्न त्याग देते हैं। कुछ एकभुक्त रहकर शक्ति-उपासना करते हैं। कुछ [illegible]' का सकाम या निष्कामभावसे पाठ [illegible] रहकर पाठ करना आवश्यक है, अतः [illegible] पालन करते हुए भगवती [illegible] अनुष्ठान [illegible] रहेंगे [illegible] करनेसे [illegible] इसमें [illegible] और वैधृतियोग हो तो उनकी समाप्ति होनेके बाद व्रत प्रारम्भ करना चाहिये। परंतु देवीका आवाहन, स्थापन और विसर्जन—ये तीनों प्रातःकालमें होने चाहिये। अतः यदि चित्रा, वैधृति अधिक समयतक हों तो उसी दिन अभिजित् मुहूर्त (दिनके आठवें मुहूर्त यानी दोपहरके एक घड़ी पहलेसे एक घड़ी बादतकके समय)-में आरम्भ करना चाहिये।

### आरम्भिक कर्तव्य

आरम्भमें पवित्र स्थानकी मिट्टीसे वेदी बनाकर उसमें जौ, गेहूँ बोये। फिर उनके ऊपर अपनी शक्तिके अनुसार बनवाये गये सोने, ताँबे आदि अथवा मिट्टीके कलशको विधिपूर्वक स्थापित करे। कलशके ऊपर सोना, चाँदी, ताँबा, मृत्तिका, पाषाण अथवा चित्रमयी मूर्तिकी प्रतिष्ठा करे। मूर्ति यदि कच्ची मिट्टी, कागज या सिन्दूर आदिसे बनी हो और स्नानादिसे उसमें विकृति होनेकी आशंका हो तो उसके ऊपर शीशा लगा दे। मूर्ति न हो तो कलशके पीछे स्वस्तिक और उसके दोनों पार्श्वोंमें त्रिशूल बनाकर दुर्गाजीका चित्र, पुस्तक तथा शालग्रामको विराजितकर विष्णुका पूजन करे। पूजन सात्त्विक हो, राजस और तामस नहीं। नवरात्रव्रतके आरम्भमें स्वस्तिवाचन-शान्तिपाठ करके संकल्प करे और तब सर्वप्रथम गणपतिकी पूजा कर मातृका, लोकपाल, नवग्रह एवं वरुणका सविधि पूजन करे। फिर प्रधानमूर्तिका षोडशोपचार पूजन करना चाहिये। अपने इष्टदेव—राम, कृष्ण, लक्ष्मी-नारायण या भगवती दुर्गादेवी आदिकी मूर्ति ही प्रधानमूर्ति कही जाती है। पूजन वेद-विधि या सम्प्रदाय-निर्दिष्ट विधिसे होना चाहिये। दुर्गादेवीकी आराधना-अनुष्ठानमें महाकाली, महालक्ष्मी और महासरस्वतीका पूजन तथा मार्कण्डेयपुराणान्तर्गत निहित 'श्रीदुर्गासप्तशती'का पाठ मुख्य अनुष्ठेय कर्तव्य है।

### पाठविधि

'श्रीदुर्गासप्तशती' पुस्तकका—

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥

—इस मन्त्रसे पञ्चोपचार पूजन कर यथाविधि पाठ करे।

# BUDDHIST TEXTS

OF THE

## NORTHERN AND SOUTHERN SCHOOLS

*PUBLISHED BY THE*

## BUDDHIST TEXT SOCIETY OF INDIA.







# सुवर्णप्रभा।

## SUVARNA PRABHĀ

FOR THE FIRST TIME EDITED BY

*Rai* ÇARAT CHANDRA DĀS *Bahadur* C I E

AND

*Pandit* ÇARAT CHANDRA ÇĀSTRĪ

*Fasc* I

1898

## CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

*Publishers —Messrs Kegan Paul Trench, Trübner & Co Luzac & Co London.*

*Continental Agents —Messrs Otto Harrassowitz M Spirgatis Leipzig*

86-2, JAUN BAZAR STREET CALCUTTA

2750






# SUVARNAPRABHA.

# सुवर्णप्रभा

ॐ नमः श्रीसर्व्वबुद्धबोधिसत्त्वेभ्यः ।
नमः श्रीभगवत्यै आर्य्यप्रज्ञापारमिताये ॥

तद्यथा ।

श्रुतिस्मृतिगतिविजया(य) - स्वाहा ॥

श्रुतं मयैकसमये गृध्रकूटे तथागतः ।
विजहार धर्म्मधातौ गम्भीरे बुद्धगोचरे ॥

बोधिसत्त्वसमुच्चयया महाकुलदेवतया सरस्वत्या च महादेवतया श्रिया च महादेवतया दृढया च महापृथिवीदेवतया हारीत्या च महादेवतया । एवम्प्रमुखाभिर्महादेवताभिरनेकदेवनागयक्षराक्षसगान्धर्व्वासुरगरुत्मकिन्नरमहोरगमनुष्यामनुष्यैः सार्द्धम् । अथायुष्मान् आनन्दो भगवन्तमेतदवोचत् किं तेषां च भगवन् धर्म्मविनयो भविष्यतीति । भगवानाह गाथाभिः

येन दुःप्रच्छया विरजस्कं समाधिं धर्म्मसारं प्रतिष्ठितम् ।
शुद्धेषु विरजस्केषु बोधिसत्त्वोत्तमेषु च ॥

निदानं सूत्रराजेन्द्रस्वर्णप्रभासोत्तममिदम् ।
ततो गम्भीरश्रवणेन गम्भीरस्वपपरीक्षणेन ॥

दशदिक्षु च तिसृषु बुद्धैरधिष्ठानमधिष्ठितम् ।
अक्षोभ्यराजः पूर्व्वस्मिन् दक्षिणे रत्नकेतुना ॥

पश्चिमायाममिताभ उत्तरे दुन्दुभिस्वरः ।
तं प्रवक्ष्याम्यधिष्ठानं माङ्गल्यदर्शनोत्तमम् ॥

सर्व्वपापविनाशार्थं सर्व्वपापक्षयङ्करम् ।
सर्व्वसौख्यप्रदातारं सर्व्वदुःखविनाशनम् ॥



Sa a Bu

मूलं सर्व्वज्ञतत्त्वस्य सर्व्वश्रीसमलङ्कृतम् ।
उपहतेन्द्रिया ये हि सत्त्वा नष्टा हतायुषः ॥

अलक्ष्म्यापरिविष्टा* हि देवतास्तु पराङ्मुखाः ।
कान्तया ये जना निष्ठाः कुटुम्बादिष्वपद्रुताः ॥

परस्परविरुद्धा वा अर्थनाशैरुपद्रुताः ।
शोकायासेऽप्यनर्थे च भयव्यसन एव च ॥

ग्रहनक्षत्रभीता ये क्रान्ता वा दारुणग्रहैः ।
पापकं पश्यति स्वप्नं शोकायाससमुच्छ्रितम् ॥

तेन सुस्नानशुचिना श्रोतव्यं सूत्रमुत्तमम् ।
शृण्वन्ति य इदं सूत्रं गम्भीरं बुद्धगोचरम् ॥

सौमनस्काः प्रसन्नास्याः शुचिवस्त्रैरलङ्कृताः ।
तेषां सर्व्वे तथा नित्यमुपसर्गाः सुदारुणाः ॥

तेजसा वास्य सूत्रस्य शाम्यन्ते सर्व्वप्राणिनाम् ।
शृण्वन्ते लोकपाला हि सामात्याः सगणेश्वराः ॥

तेषां रक्षां करिष्यन्ति ह्यनेकैर्यक्षकोटिभिः ।
सरस्वती महादेवी तथा श्रीर्जयवासिनी ॥

हारीती भूतमाता च दृढा पृथिवीदेवता ।
ब्रह्मेन्द्रैस्त्रिदशेन्द्रैश्च महर्द्धिः किन्नरेश्वरैः ॥

गरुत्मेन्द्रैस्तथा सार्द्धं यक्षगन्धर्व्वपन्नगैः ।
ते च तत्रोपसंक्रम्य ससैन्यबलवाहनाः ॥

तेषां रक्षां करिष्यन्ति दिवारात्रौ समाहिताः ।
इदं सूत्रं प्रकाशिष्ये गम्भीरं बुद्धगोचरम् ॥

---

* अलक्ष्म्यापरिविष्टाः अलक्ष्मीका इत्यर्थः ॥

रहस्यं सर्व्वबुद्धानां दुर्लभं कल्पकोटिभिः ।
देवनागमनुष्यैश्च किन्नरासुरगुह्यकैः ॥

पुण्यस्कन्धमपर्यन्तमसंख्येयमचिन्तितम् ।
तत्तेषां प्रसृतं भाति कृतपुण्येन प्राणिनाम् ॥

प्रगृहीता भविष्यन्ति सर्व्वबुद्धैर्दिगास्थितैः ।
गम्भीरचरितैर्विश्वबोधिसत्त्वैस्तथैव च ॥

बौद्धचीवरप्रावृत्या सुगन्धजलपावनैः ।
मैत्रचित्तं समुत्थाय पूजितव्यमतन्द्रितैः ॥

विमलं विपुलं चित्तमात्मानं प्रकरिष्यति* ।
प्रसादयंश्चैतानि शृणुहि सूत्रमुत्तमम् ॥

स्वागतं च मनुष्येषु सुरम्यं मानुषं फलम् ।
सुजीविताश्च जीवन्ति सूत्रं शृण्वन्ति ये त्विदम् ॥

उप्तकुशलमूलास्ते बहुबुद्धस्य सेवकाः ।
येषामिदं कर्णपुटं देशितं संप्रविशति ॥ इति ।

इति सुवर्णप्रभासोत्तमसूत्रराजनिदानपरिवर्त्तो
नाम प्रथमः ॥

---

तेन खलु पुनः कालेन समयेन राजगृहमहानगरे रुचिरकेतुर्नाम बोधिसत्त्वो महासत्त्वः प्रतिवसति स्म पूर्व्वजिनकृताधिकारोपितकुशलमूलो बहुबुद्धकोटिनियुतशतसहस्रपर्य्युपासितः ॥ तस्यैतदभवत् ॥ को हेतुः कः प्रत्ययो यद्भगवतः शाक्यमुनेरेवं परीत्तमायुः-प्रमाणं यदुताशीतिवर्षाणि ॥

पुनस्तस्यैतदभवत् ॥ उक्तस्तैव भगवता द्वौ हेतू द्वौ च प्रत्ययौ दीर्घायुष्कतायां ॥ कतमौ द्वौ प्राणातिपातवैरमणं भोजनप्रदानं च ॥ अथ बहून्यसंख्येय कल्पकोटिनियुतशतसहस्राणि भगवाञ्छाक्यमुनिः प्राणातिपातात्प्रतिविरतो बभूव यावद्दशकौशलमूलकर्म्मपथं समादापयेत्

---

* प्रक थति इति पाठो मूलपुस्तके दृश्यते ।

तावन्ति भगवतो भाजनमाध्यात्मिकं बाह्यानि वस्तूनि सत्त्वानां परित्यक्तानि ॥ अन्तशः स्वशरीरमान् सरुधिरास्थिमज्जया बुभुक्षिताः सत्त्वाः सन्तर्पिता प्रागेवान्नेन भोजनेन ॥

अथ तस्य पुरुषस्य बुद्धानुस्मृतिमनसिकारस्य मानवदिव्यरूपाचिन्त्यचिन्तयमानस्य एवं विपुलं विस्तीर्णं संप्रवृत्तमभवद् वैडूर्य्यमयमनेकदिव्यरत्नप्रत्युप्तं तथागतविग्रहदिव्यातिक्रान्तेन गन्धेन स्फुटम् । तस्मिंश्च गृहचतुर्द्दिशि चत्वारि दिव्यरत्नमयान्यासनानि प्रादुर्भूतान्यभवन् । तेषु चासनेषु दिव्यानि पर्य्यङ्कानि दिव्यरत्नदुष्यपुगप्रज्ञप्तानि प्रादुर्भूतानि बभूवुः ॥ पुरस्तात् मनन्वक्षोभ्यस्तथागतः प्रादुर्भूतो दक्षिणेन रत्नकेतुस्तथागतः प्रादुर्भूतः पश्चिमेनामिताभस्तथागतः प्रादुर्भूतः उत्तरे दुन्दुभिस्वरस्तथागतः प्रादुर्भूतः । समनन्तरे प्रादुर्भूता आसने ते बुद्धा भगवन्तस्तेषु सिंहासनेषु ॥

अथ ते देवा राजगृहं महानगरं महतावभासेनावभासितं स्फुटं बभूव यावत् त्रिसाहस्रमहासाहस्रलोकधातुम् । यावत् समन्तात् दशसु दिक्षु गङ्गानदीवालुकासमा लोकधातवस्तेनावभासेन स्फुटा बभूवुः दिव्यानि च पुष्पाणि प्रावर्षुः दिव्यानि च तूर्य्याणि प्रावादयन् । सर्व्वे तस्मिन् त्रिसाहस्रमहासाहस्रलोकधातौ सत्त्वा बुद्धानुभावदिव्यसुखेन समन्वागता बभूवुः ॥ जात्यन्धाः सत्त्वाः रूपाणि पश्यन्ति बधिराश्च सत्त्वाः सत्वेभ्यः शब्दान् शृण्वन्ति उन्मत्ताश्च सत्त्वाः स्मृतिं प्रतिलभन्ते विक्षिप्तचित्ताश्च स्मृतिमन्तो बभूवुः । नग्नाश्च सत्त्वाश्चीवरप्रावृता बभूवुः । जिघांसिताश्च सत्त्वाः परिपूर्णगीता बभूवुः । तृषिताश्च सत्त्वाः विगततृषा बभूवुः । रागपृष्टाश्च सत्त्वा विगतरागा बभूवुः । हीनकायाश्च सत्त्वाः परिपूर्णेन्द्रिया बभूवुः । विस्तरेण बहूनामाश्चर्य्याद्भुतधर्म्माणां लोकप्रादुर्भावा बभूवुः ॥

अथ रुचिरकेतुर्बोधिसत्त्वस्तान् बुद्धान् भगवतो दृष्ट्वाश्चर्य्यं प्राप्ता बभूवुः कतमे तदिति । तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो येन ते बुद्धास्तेनाञ्जलिं प्रणम्याकारतस्तान् बुद्धान् भगवतोऽनुस्मरमाणो भगवतः शाक्यमुनेर्गुणानुस्मरमाणो भगवतः शाक्यमुनेरायुः-प्रमाणसंशयप्राप्तस्तां चिन्तां चिन्तयमानः स्थितो बभूव । कथमेतत् किमेतद् यद्भगवतः शाक्यमुनेरेवं परीत्तमायुः-प्रमाणं यदुताशीति वर्षाणि ॥

अथ खलु ते बुद्धा भगवन्तः स्मृताः संप्रजानास्तं रुचिरकेतुं बोधिसत्त्वमेतदवोचत् ॥ मा त्वं कुलपुत्र एवं चिन्तय एवं परीत्तं भगवतः शाक्यमुनेरायुः-प्रमाणम् ॥ तत् कस्य हेतोः ॥ न चैव कुलपुत्र तं समनुपश्यामः सदेवकलोकसमारकसब्रह्मकसश्रमणब्राह्मणिकायां प्रजायां सदेवमानुषासुरायां यः समर्थः स्याद्भगवतः शाक्यमुनेस्तथागतस्यायुः-प्रमाणपर्यन्तमधिगन्तुम् ॥ यावदपरान्तकोटिभिः स्थापयित्वा तथागतान् सम्यक्सम्बुद्धान् । समनन्तरोदाहृतमार्द्धुंतै-र्भगवद्भिस्तथागतायुः-प्रमाणं निर्द्देश्यम् ॥

अथ तावद्बुद्धानुभावेन कामावचरा रूपावचराश्च देवपुत्राः सन्निपतिताः ॥ यावन्नागयक्षगन्धर्व्वासुरगरुडकिन्नरमहोरगा अनेकानि च बोधिसत्त्वकोटीनियुतशतसहस्राणि तस्मिन् रुचिरकेतोर्बोधिसत्त्वस्य गृहं समागता आसन् ॥ अथ ते तथागताः सर्व्वे च ते पार्षद्या भगवतः शाक्यमुनेरायुःप्रमाणनिर्द्देशं गाथाभिरभाषन्त ॥

महार्णवेषु सर्व्वेषु शक्यन्ते गणयितुं बिन्दुभिः।
न तु शाक्यमुनेरायुः शक्यं गणयितुं क्वचित्॥

सुमेरुपरमाणूनि कृत्वा शक्यश्च संख्यया।
न तु शाक्यमुनेरायुः शक्यं गणयितुं क्वचित्॥

याः काश्चित् पृथिव्यः सन्ति यावन्तः परमाणवः।
शक्यं गणयितुं सर्व्वान् न तु चायुर्जिनस्य वै॥

आकाशं यदि वा कश्चिदिच्छेद्वा मथितुं क्वचित्।
न तु शाक्यमुनेरायुः शक्यं गणयितुं क्वचित्॥

इत्युक्तानि च कल्पानि कल्पकोटिशतानि च।
एष तिष्ठश्च संबुद्धः संख्यातो न हि लभ्यते॥

यस्माद्दे कारणे तस्य तथैव द्वौ च प्रत्ययौ।
विरतः पापहिंसायाः बहुहेतुश्च भोजनम्॥

यस्मात्तस्य महात्मनो ह्यायुः संख्या न लभ्यते।
इत्युक्तानि च कल्पानि संख्यया च तथैव च॥

तस्मात्त्रिसमये मा हि माकिञ्चित्कुरु संशयम्।
न जिनस्यायुः-पर्य्यन्तं क्वचित् संख्योपलभ्यते॥

अथ खलु तस्मिन् समये तत्र पर्षदि आचार्य्यव्याकरणः प्राप्तः कौण्डिल्यो नाम ब्राह्मणः अनेकैर्ब्राह्मणसहस्रैः सार्द्धं भगवतः पूजाकर्म्म कृत्वा तथागतस्य महापरिनिर्व्वाणशब्दं श्रुत्वा सहसा तस्य भगवतश्चरणयोर्निपत्य भगवन्तमेवमाह। स चेत् किल सर्व्वसत्त्वानुकम्पको महाकारुणिको हितैषी सर्व्वसत्त्वानां मातापितृभूतः असमसमभूतश्च शुभालोककरो महाप्रज्ञाज्ञानसूर्य्यसमुद्गतः॥ यदि त्वं सर्व्वसत्त्वानां बाहुलं स्वं संमन्यसि मह्यमेकं वरं देहि भगवांस्तूष्णीम्भूतोऽभूत्॥

अथ बुद्धानुभावेन तस्यां पर्षदि सर्व्वसत्त्वप्रियदर्शनो नाम लिच्छविकुमारस्तस्य प्रतिभानमन्योन्यं स आचार्य्यव्याकरणकौण्डिल्यं ब्राह्मणमेवमाह॥ किं नु त्वं महाब्राह्मण! भगवन्त-

मेकं वरं याचयि अहं ते वरं ददामि ॥ ब्राह्मण आह ॥ अहमस्मि भो लिच्छविकुमार
भगवतः पूजोपस्थापनाय भगवतः सर्षपफलमात्रधातुमिच्छामि निवेदितुं चूर्णं धातुमभि-
प्रयोजनार्थेन सर्षपमात्रं धातुमभिपूजयित्वा त्रिदशाधिपत्यं लभ्यत इति ॥ एवं श्रूयते ॥ श्रूत्यं
लिच्छविकुमार सुवर्णप्रभासोत्तमसूत्रं दुर्विज्ञेयं सर्व्वश्रावकप्रत्येकबुद्धानां तादृशैर्लक्षणगुणैः
समन्वागतः किल सुवर्णप्रभासोत्तमसूत्रं भावयिष्यति ॥ एवं भो लिच्छविकुमार दुर्विज्ञेयं
दुरनुबोधं सुवर्णप्रभासोत्तमसूत्रं अस्माकमेकं प्रत्यन्तद्वीपिकानां ब्राह्मणः सर्षपमात्रं धातु
करेणुकं निश्चितवान् ॥ अहं ते वरं याचे येन सत्वाः क्षिप्रमेव त्रिदशाधिपत्यं प्रतिलाभिनो
भविष्यन्ति ॥ त्वं भो लिच्छविकुमार सर्षपफलमात्रं धातु तथागतस्यायाचितुम् ॥ धातु
कलेणुके निश्चिप्यावहि अथ सर्व्वसत्वानां त्रिदशाधिपेश्वरलाभ इतीच्छतः ॥ एवं मया भो
लिच्छविकुमार दातुम् ॥ अथ सर्व्वलोकप्रियदर्शनो नाम लिच्छविकुमार आचार्य्यव्याकरण-
कौण्डिन्यब्राह्मणं गाथाभिरध्यभाषत ॥

यदा स्रोतःसु गङ्गाया रोहेयुः कुसुमानि च ।
रक्ता काका भविष्यन्ति शङ्खवर्णाश्च कोकिलाः ॥

जम्बुस्तालफलं दद्यात् खर्ज्जूरश्चाम्रमञ्जलीम् ।
तदा सर्षपमात्रश्च व्यक्तं धातुर्भविष्यति ॥

यदा कच्छपलोमानां प्रावारैः सुवृतो भवेत् ।
हेमन्तः शीतहरणे तदा धातुर्भविष्यति ॥

यदा मशकपादानामट्टालमनोभवेत् ।
दृढ़श्चाप्यप्रकम्पी च तदा धातुर्भविष्यति ॥

यदा तीक्ष्णा महान्तश्च दन्ता जायन्ति पांशुलाः
जलौकानां हि सर्व्वेषां तदा धातुर्भविष्यति ॥

यदा शशविषाणेन निःश्रेणी सुदृढ़ं भवेत् ।
स्वर्गस्यारोहणार्थाय तदा धातुर्भविष्यति ॥

ताः निश्रेणीर्यदारुह्य चन्द्रं भक्षयन् मूषिकः ।
राहुं च परिधावेत तदा धातुर्भविष्यति ॥

यदा मद्यघटं पीत्वा मक्षिका ग्रामचारिणी ।
अगारे वासं कल्पेयुस्तदा धातुर्भविष्यति ॥

यदा तिर्य्यायसम्पन्नो गर्द्दभः सुखितो भवेत् ।
कुशलो नृत्यगीतेषु तदा धातुर्भविष्यति ॥

यदा उलूककाकाश्च रममेयुरहोगताः ।
अन्यान्यमनुकूलेन तदा धातुर्भविष्यति ॥

यदा पलाशपत्राणां छत्रं हि विपुलं भवेत् ।
वर्षस्य प्रतिघाताय तदा धातुर्भविष्यति ॥

यदा सामुद्रिका नावः सयन्त्राः सपताकिकाः ।
स्थलमारुह्य गच्छेयुस्तदा धातुर्भविष्यति ॥

यदा उलूकशकुनाः पर्व्वतं गन्धमादनम् ।
तुण्डेनादाय गच्छेयुस्तदा धातुर्भविष्यति ॥

एताश्च गाथाः श्रुत्वा आचार्य्यव्याकरणकौण्डिन्यो ब्राह्मणः सर्व्वलोकप्रियदर्शनं लिच्छवि-कुमारं गाथाभिः प्रत्यभाषत ॥

साधु साधु कुमाराग्र जिनपुत्र महागिर ।
उपायकुशलो वीरः प्राप्तव्यः करुणोत्तमः ॥

मम कुमार शृणुष्व लोकनाथस्य तायिनः ।
तथागतस्य माहात्म्यं यथाक्रममचिन्तितम् ॥

अचिन्त्यं बुद्धविषयं असमाश्च तथागताः ।
सर्व्वे बुद्धाः शिवा नित्यं सर्व्वबुद्धाः समुद्गताः ॥

सर्व्वबुद्धाः समवर्णा एषा बुद्धेषु धर्म्मता ।
न कृत्रिमोऽसौ भगवान् नोत्पन्नश्च तथागतः ॥

वज्रसंहतनकायो निर्म्मितं कायं दर्शयेत् ।
नापि सर्षपमात्रं च धातुं नाम महर्षिणः ॥

अनस्थिरुधिरे काये कुतो धातुर्भविष्यति ।
उपायधातुनि शेषं सत्त्वानां हितकारणम् ॥

धर्म्मकायो हि संबुद्धो धर्म्मधातुस्तथागतः ।
ईदृशो भगवान् काय ईदृशी धर्म्मदेशना ॥

एतच्छ्रुतं मया ज्ञात्वा याचितं हि वरं मया ।
तत्त्वव्याकरणार्थाय वरं माख्योदमुनेः कृतम् ॥

अथ खलु द्वात्रिंशद्देवपुत्रसहस्राणि तथागतस्येमं गम्भीरमायुः-प्रमाणनिर्द्देशं श्रुत्वा सर्व्वैर-नुत्तरायां सम्यक् सम्बोधौ चित्तान्युत्पादितानि ते प्रहृष्टमनः-सङ्कल्पा एकस्वरनिर्घोषण-गाथामभाषन्त ॥

न बुद्धः परिनिर्व्वाति न धर्म्मः परिहीयते ।
सत्त्वानां परिपाकाय परिनिर्व्वाणं निर्द्देशयेत् ॥

अचिन्त्यो भगवान् बुद्धो नित्यकायस्तथागतः ।
दिशति विविधां व्यूहां सत्त्वानां हितकारणात् ॥

अथ खलु रुचिरकेतुर्बोधिसत्त्वस्तेषां बुद्धानां भगवतां तयोर्द्वयोः सुपुरुषयोरन्तिकाद् भगवतः शाक्यमुनेरायुःप्रमाणनिर्द्देशं श्रुत्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्य-जातस्तोदारेण प्रीतिप्रामोद्येन स्फुटोऽभूत् ॥ अस्मिन् तथागतायुः-प्रमाणनिर्द्देशनिर्द्दिश्यमाने अप्रमेयानां असंख्येयानां सत्त्वानामनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादितम् । ते च तथागता अदृष्ट त इति ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजतथागतायुःप्रमाण-
निर्द्देशपरिवर्त्तो नाम द्वितीयः ॥

---

अथ खलु रुचिरकेतुर्नाम बोधिसत्त्वः सुप्तः स्वप्नान्तरगतः सुवर्णां सुवर्णमयिकां भेरीमद्राक्षीत् समन्तादवभासमानाम् । तद्यथापि नाम सूर्य्यमण्डलं सर्व्वासु च दिक्षु अप्रमेयानसंख्येयान् बुद्धानद्राक्षीत् रत्नवृक्षमूलवैदूर्य्यासनप्रतिनिषण्णान् अनेकशतसहस्त्रिकायां परिषदायां परिवृतायां पुरस्कृतायां धर्म्मन्देशयमानान् ॥

तत्र च ब्राह्मणं रूपेण पुरुषमद्राक्षीत् तां भेरीमपरोहन्तं तां तत्र भेरीशब्दादिमामेवंरूपाम् गाथां निश्चरमाणामश्रौषीत् । अथ खलु रुचिरकेतुर्बोधिसत्त्वः प्रतिविबुद्धः समानतां धर्म्मदेशनां गाथामनुस्मरन्ति स्म ॥ अनुस्मरमाणस्तस्यां रात्र्यां अत्ययेन राजगृहान्महानगरान्निष्क्रम्यानेकैः प्राणिसहस्त्रैः सार्द्धं येन गृध्रकूटः पर्व्वतराजो येन भगवांस्तेनोपसंक्रान्त उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिःप्रदक्षिणीकृत्यैकान्ते न्यषीदत् एकान्ते निषण्णः । अथ खलु रुचिरकेतुर्बोधिसत्त्वो येन भगवांस्तेनाञ्जलिं प्रणम्य यार्श्ववताः स्वप्नान्तरदुन्दुभिशब्देन देशना गाथाः श्रुतास्ता उवाच ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजस्वप्नपरिवर्त्तो
नाम तृतीयः ॥

---

एकरात्रमतन्द्रितेन स्वप्नान्तरगतं मया ।
दुन्दुभी रुचिरा दृष्टा समन्तात् कनकप्रभा ॥

ज्वलमानो यथा सूर्य्यः समन्ताच्च विराजते ।
प्रभासिता दश दिशो दृष्टा बुद्धाः समन्ततः ॥

निषण्णा रत्नवृक्षेषु वैदूर्य्ये च प्रभास्वरे ।
अनेकशतसहस्रायां परिषदायां पुरस्कृताः ॥

दृष्टं ब्राह्मणरूपेण परा*नन्तदुन्दुभिं ।
तेनाकोट्यमानया इमाः श्लोकाश्वराः ॥

सुवर्णप्रभासोत्तमदुन्दुभेन
शाम्यन्तु दुःखास्त्रिसहस्रलोके ।

---

* दृष्टा ब्राह्मणरूपेण परानन्तदुन्दुभिः ।
तया कोट्यमानया इमे श्लोकाश्वरा इति पाठः साधुः ।

अपापदुःख-यमलोक-दुखाः
दारिद्रदुःखास्तथेहलोके ॥

अनेन च दुन्दुभिशब्दनादिना
शाम्यन्तु सर्व्वव्यसनानि लोके ।
समन्तसत्वा हृदयाह्वता यथा
तथा तथा शान्तभया मुनीन्द्र ॥

यथैव सर्व्वार्य्यगुणोपपन्नः
संसारसर्व्वज्ञः महामुनीन्द्रः ।
तथैव भान्तु गुणसागराः प्रजाः
समाधिबोध्यङ्गगुणैरुपेताः ॥

अनेन च दुन्दुभिघोषनादिना
भवन्तु ब्रह्मेश्वरसर्व्वसत्वाः ।
शोभवन्तु* बुद्धत्वं च रागबोधाः
प्रवर्त्तन्तु† शुभधर्म्मचक्रम् ॥

तिष्ठन्तु कल्पानि अचिन्तियानि,
देशन्तु‡ धर्मं जगतो हिताय ।
हनन्तु क्लेशा विशमन्तु दुःखं
शमन्तु रागं तथ दोषमोहम् ॥

ये सत्व§ तिष्ठन्त अपायभूमौ
आदीप्तसंप्रज्वलिताग्निगात्राः ।
शृण्वन्तु ते दुन्दुभिसंप्रवादितां
नमोऽस्तु बुद्धाय च वो लभन्तु ॥

---

* शोभन्तां इति साधु । † प्रवर्त्तन्तां इति साधु ।
‡ दिशन्तु इति साधु । § सत्वा इति भवितुमर्हति ।

जातिस्मराः सत्त्व भवन्तु सर्व्वे
जातीशता जातिसहस्रकोट्यः ।
अनुस्मरन्तः सततं मुनीन्द्रं
शृण्वन्तु तेषां वचनं ह्युदारम् ॥

अनेन च दुन्दुभिघोषनादिना
लभन्तु बुद्धे हि सदा समागमम् ।
विवर्ज्जयन्तु खलु पापकर्म्म
चरन्तु* कुशलानि शुभक्रियाणि ॥

नरासुराणामपि सर्व्वप्राणिणाम्
जन्तु तां देशप्रार्थनाय ।
अनेन च दुन्दुभिघोषनादिना
तत्सर्व्वि तेषां परिपुरयेयाम् ॥

यद्यारणतरुउपपन्नसत्त्वा
आदीप्तसंप्रज्वलिताग्निगात्राः ।
विस्तीर्णशोकाश्च परिक्रमन्ति
निर्व्वापणं भेष्यति तेषु वासुना ॥

ये दुःखसत्त्वा प्रवलाश्च घोरा
नरकेषु पुतेषु मनुष्यलोके ।
अनेन च दुन्दुभिघोषनादिना
सर्व्वे च तेषां प्रशमन्तु दुःखाः ॥

निस्त्राणमपरित्राणमशरणं कृतानि च ।
त्राता तेषां भवेयं च शरण्यः शरणोत्तमः ॥

---

* चरन्तु इति साधु ।

समन्वाहरन्तु मां बुद्धाः कृपाकारुण्यचेतसः ।
अत्ययं प्रतिगृह्णन्तु दशदिक्षु व्यवस्थिताः ॥

यच्च मे पापकं कर्म कृतं पूर्वं सुदारुणम् ।
तत्सर्वं देशयिष्यामि स्थितोऽहं दशबलाग्रतः ॥

मातापितॄनवज्ञानाद्बुद्धानामप्रजानता ।
कुशलं वाचजातेन यच्च पापं कृतं मया ॥

ऐश्वर्यमदमत्तेन कुलरूपमदेन च ।
तारुण्यमदमत्तेन यच्च पापं कृतं मया ॥

दुश्चिन्तितं दुरुक्तञ्च दुष्कृतेनापि कर्मणा ।
अनादीनवदृष्टेन यच्च पापं कृतं मया ॥

बालबुद्धिप्रचारेण अज्ञानावृतचेतसा ।
पापमित्रवशाच्चैव क्लेशव्याकुलचेतसा ॥

क्रीडारतिवशाच्चैव शोकरागवशेन वा ।
अतृप्तधनदोषेण यच्च पापं कृतं मया ॥

अनार्यजनसंसर्गादीर्ष्यामात्सर्यहेतुना ।
शाठ्य दारिद्र्यदोषेण ये तु पापाः कृता मया ॥

व्यसनागमकालेऽस्मिन् कामानां भयहेतुना ।
अनैश्वर्यगतेनापि ये तु पापाः कृता मया ॥

चलचित्तवशेनेव कामक्रोधवशेन वा ।
क्षुत्पिपासार्दितेनापि यच्च पापं कृतं मया ॥

पानार्थं भोजनार्थं च वस्त्रार्थं स्त्रीषु हेतुना ।
विविधक्लेशसन्तापैश्च पापं कृतं मया ॥

कायवाचमानसं पापं त्रिधातु चरितं च तत् ।
यत्कृतमीदृशं रूपं तत्सर्व्वं देशयाम्यहम् ॥

यच्च बुद्धेषु धर्म्मेषु श्रावकेषु तथैव च ।
अगौरवं कृतं स्याद्धि तत्सर्व्वं देशयाम्यहम् ॥

यत्तत्प्रत्येकबुद्धेषु बोधिसत्त्वेषु वा पुनः ।
अगौरवं कृतं स्याद्धि तत्सर्व्वं देशयाम्यहम् ॥

सद्धर्म्मप्रतिक्षिप्तः स्यादज्ञानन्तेनमयाहा ।
मातापितृष्वगौरवं तत्सर्वं देशयाम्यहम् ॥

मूर्खत्वेनापि बालत्वान्मानदर्प्पावृतेन च ।
रागद्वेषेण मोहेन तत्सर्वं देशयाम्यहम् ॥

पूजयित्वा दशदिक्षु लोके दशबलाञ्जिनान् ।
उद्धरिष्याम्यहं सत्त्वान् सर्व्वदुःखाद्दशदिशि ॥

स्थापयिष्ये दशभूम्यां सर्व्वसत्त्वानचिन्तियान् ।
दशभूमौ स्थिहित्वा* च सर्व्वे भान्तु तथागताः ॥

एकैकस्य हि सत्त्वस्य चरेयं कल्पकोटिया ।
यावच्छक्यं हि तत्सर्व्वमाचेतुं दुःखसागरात् ॥

तेषां सत्त्वान् देशेयं गम्भीरां देशनामिमाम् ।
सुवर्णप्रभासोत्तमा नाम सर्व्वकर्म्मक्षयङ्करी ॥

---

* स्थित्वा इति संस्कृतम् ।

येन कल्पसहस्रेषु कृतं पापं सुदारुणम् ।
एकवेलाप्रकाशन्तु सर्व्वं व्रजति संचयम् ॥

देशयिष्य इमं धर्म्मं सुवर्णप्रभासोत्तमम् ।
ये शृण्वन्ति शुभं तेषां संयान्तु पापसंचयम् ॥

स्थास्यामि दशभूमौ तां दशरत्नां चरे वने ।
आभासयन् बुद्धगुणैस्तरेयं भवसागरात् ॥

तच्च संसारसमुद्रौघं गम्भीरं गुणसागरम् ।
अचिन्तियं* बुद्धगुणैः सर्व्वज्ञत्वं प्रपूरये ॥

समाधिशतसहस्रैर्धारणीभिरचिन्तियैः ।
इन्द्रियैर्बलबोध्यङ्गैर्भवेयं दशबलोत्तमम् ॥

अवलोकय मां बुद्धः समन्वाहृतचेतसा ।
अत्ययं प्रतिगृह्णातु तारये तु मां भयात् ॥

यत्र पापं कृतं पूर्व्वं मया कल्पशतेषु च ।
तस्यार्थं शोकचित्तोऽहम् कृपणो दृष्णयार्दितः ॥

भवामि पापकर्म्मणा सततं दीनमानसः ।
यत्र यत्र चरिष्यामि न चास्ति मे बलं क्वचित् ।

सर्व्वकारुणिको बुद्धः सर्व्वभयहरो जिनः ।
अत्ययं प्रतिगृह्णन्तु तारयन्तु च मां भयात् ॥

क्लेशकर्म्मफलं मह्यं प्रवाहयन्तु तथागताः ।
स्नापयन्तु च मां बुद्धाः कारुण्यविमला . . . ॥

. . . . . . . . . . . . मया ।
यत्र एतर्हि मे पापं तत्सर्व्वं देशयाम्यहम् ॥

* अचिन्तिये. इति भद्रकम् ।

आपन्नः सर्व्वपापेभ्यः सर्व्वदुष्कृतकर्मणः ।
लभ्योदयामि तत्पापं यद्भवेन्मम . . . ।
. . . . . . . चतुर्व्विधम् ॥

मानसं त्रिप्रकारं च तत्सर्व्वं देशयाम्यहम् ।
कायकृतं च वाक्कृतं मनसा च विचिन्तितम् ॥

कृतं दशविधं कर्म्म तत्सर्व्वं देशयाम्यहम् ।
दशाकुशलान् वर्जित्वा सञ्चित्वा कुशलान्दश ॥

स्थास्यामि दशभूमौ च भवेद्दशबलोत्तमः ।
. . . . . . . . . . . . . . . ॥

यच्च मे पापकं कर्म्म अनिष्टफलवाहकम् ।
तत्सर्व्वं देशयिष्यामि बुद्धानां पुरतः स्थितः ॥

ये चापि जम्बूद्वीपेऽस्मिन् ये चान्ये लोकधातुषु ।
कुर्व्वन्ति कुशलं कर्म्म तत्सर्व्वमनुमोदये ॥

यच्च पुण्यार्ज्जितं मह्यं कायवाङ्मनसापि च ।
तेन कुशलमूलेन स्पृशेयं बोधिमुत्तमाम् ॥

भगवति सङ्कट बालबुद्धिना,
पापमपि यत्कृतञ्च सुदारुणम् ।
दशबलसङ्कटमग्रतः स्थितः,
तत्सर्व्वपापं प्रतिदेशयामि च ॥

तत्पापं यत्समुचितजन्मसङ्कटविविधैः
कामप्रचालसङ्कटभवसङ्कटलोकसङ्कटे च ।
मूर्खकृतं क्लेशसङ्कटचापल्यचित्तसङ्कटे
पापमित्रागमसङ्कटेन च लोभसङ्कटे ॥

रागसङ्कटद्वेषसङ्कटमोहतम
सङ्कटैरपि क्षणसङ्कटकालसङ्कट ।
पुण्यसुपार्ज्जनसङ्कटैरपि जिनसङ्कट
सम्मुखस्थितः तत्सर्व्वपापं प्रतिदेशयामि ॥

वन्दामि बुद्धान् गुणसागरोपमान्
सुवर्णवर्णान् भासितदिगन्तान् ।
तेषां जिनानां शरणं व्रजामि
मूर्द्धावतां सर्व्वजिनान् नमामि ॥

सुवर्णवर्णं कनकाचलाभं
वैदूर्य्यनिर्म्मलविशुद्धमूलवनञ्च ।
श्रीतेजकीर्त्तितोज्ज्वलनाकुलबुद्धसूर्य्य
करुणाप्रभविषमकं* तमसान्धकानाम् ॥

सुनिर्म्मलं सुरुचिरं सुविराजिताङ्गं
सम्बुद्धसूर्य्यकनकामलनिःसृताङ्गम् ।
क्लेशाग्निशमनसमं ज्वलनाग्निकल्पं
प्रह्लादनं मुनिनिशाकररश्मिजालम् ॥

द्वात्रिंशल्लक्षणधरं ललितेन्द्रियाङ्गं
अनुव्यञ्जनसुरुचिरैः सुविराजिताङ्गम् ।
श्रीपूर्णतेजोज्ज्वलनाकुलरश्मिजालम्
सन्तिष्ठते तमसि सूर्य्य इव त्रिलोके ॥

* करुणाप्रभाविशमकम् इति पाठोऽत्र संगच्छते ।

वैदूर्यनिर्मलविशालविचित्रवर्णः
ताम्रारुणैरजतस्फटिकलोहिताङ्गः ।
नानाविचित्रसमलङ्कृतरश्मिजालः
त्वं संविरोचसि महामुनिसूर्यकल्पः ॥

संसारेऽनघपतितव्यसनौघमध्ये
शोक . . . . . . . . . ।
रमकम्पितवर्णवर्गे
संतारय सुगतभास्कर रश्मिजालैः ॥

वन्दामि बुद्धान् कनकोज्ज्वलाङ्गान्
सुवर्णवर्णप्रभासिताङ्गान् ।
. . . . . . . . . .
. . . वैचित्ररूपान् शुभलक्षणाङ्गान् ॥

यथा समुद्रे जलमप्रमेयं
यथा महीवांशुरजैरनन्ता ।
यथोपलैर्मेरुरनन्ततुल्यः
यथैव वाकाशमनन्तपालम् ॥

तथैव बुद्धस्य गुणाह्यनन्ताः
न शक्यं ज्ञातुं खलु सर्वसत्त्वैः ।
अनेककल्पानि तुलेतु चिन्तयेत्
न शक्यपर्यन्तगुणानि ज्ञातुम् ॥

मही सशैला सगिरिससागरा
गणे तु कल्पैरपि शक्यं जानितुम् ।
जलं च कालायमपि प्रमाणं
न शक्यं बुद्धस्य गुणाग्रपालम् ॥

एतादृशी सत्त्व भवन्तु सर्व्वे
गुणेन वर्णेन कौर्त्त्या ।
गोत्रेण तत् शोभितलक्षणेन
अशीत्यनुव्यञ्जनमण्डितेन ॥

अनेनाहं कुशलेन कर्मणा
भवेय बुद्धा न चिरेण लोके ।
देशेय धर्म्मञ्जगतोहिताय
मोचय सत्त्वान् बहु दुःखपीड़ितान् ॥

जयेय मारं सबलं समैन्यं
प्रवर्त्तयेयं शुभधर्म्मचक्रम् ।
तिष्ठेय कल्पानि अचिन्तियानि
तर्प्येय सत्त्वानमृतेन पाणिताः ॥

पूरेय षष्ठ्या रमिता अनुत्तरा
यथैव पूर्व्वकानाम् ।
हनेय क्लेशान् विषमयदुःखान्
शमयरागां स्तथा द्वेषमोहान् ॥

जातिस्मरा नित्यभवेय वाहम्
जातीशता जातिसहस्रकोट्यः ।
अनुस्मरेयं सततं मुनीन्द्रं
शृणुय तेषां वचनं ह्युदारम् ॥

अनेन वाहं कुशलेन कर्मणा
लभेय बुद्धे हि सदा समागमम् ।
विवर्ज्जयेयं खलु पापकर्म्म-
चरेय पुण्यानि शुभाकराणि ॥

सर्व्वेच चेत्रेषु च सर्व्वप्रणिणां
सर्व्वे च लो(रो)गाः प्रशमन्तु लोके।
ये सत्वविकलेन्द्रियअङ्गहीनाः
ते सर्व्वि कुशलेन्द्रिय भातु साम्प्रतम् ॥

ये व्याधिना दुर्व्वलचीणगात्राः
निश्राणभूताश्च दशदिशासु।
ते सर्व्वि मुच्यन्तु च व्याधिता लघु
लभन्तु वा रोग्यवलेन्द्रियाणि ॥

कुराजचौरसमतार्ज्जितावधप्राप्ताः
नानाविधैर्भयशतैर्व्यसनोपपन्नाः।
ते सर्व्विसत्वव्यसनागतदुःखिता हि
मुच्यन्तु ते भयशतैः परमैः सुघोरैः ॥

ये तापिता बन्धनबद्धपीड़िता
विविधेषु व्यसनेषु दश स्थितानि।
अनेकआयाससहस्रव्याकुलाः
विचित्रभयदारुणशोकप्राप्ताः ॥

ते सर्व्वि मुच्यन्तु च बन्धनेभ्यः
सन्तापिता मुच्यन्तु यातनेभ्यः।
वधाश्च मुक्ताश्च जीवितेभ्योव्यसभागतानि
भयेभ्यस्तु स . . . . . . . . . . ॥

. . . निपीड़िताश्च
लभन्तु ते भोजनपानचित्रम्।
अन्धाश्च पश्यन्तु विचित्ररूपां
वधिराश्च शृण्वन्तु मनोज्ञघोषान् ॥

नग्नाश्च वस्त्राणि लभन्तु चित्रा . . .
दरिद्र . . . धनधान्यविचित्ररत्नाः ।

सर्व्वे च सत्त्वाः सुखिनो भवन्तु
माकस्यचिद्भवतु दुःखवेदना ।
सुदर्शनाः सत्त्वा भवन्तु सर्व्वे अभिरूपप्रासाः
. . . सौम्यरूपा अनेकसुखसञ्चितनित्यं भान्तु ॥

मनश्चान्तपाराः सुसमृद्धपुण्याः
सह चित्तमात्रेण भवन्तु तेषाम् ।
वीणा मृदङ्गा पटहासुघोषकांश्चाः
पुष्करिणी तडागाः सुवर्णपद्मोत्पलपद्मिनीभिः ॥

सहसचित्तमात्रेण तु ते सभान्तु
अन्नं च पानं च तथैव वस्त्रम् ।
धनं हिरण्यं मणिमुक्तिभूषणं
सुवर्णवैडूर्यविचित्ररत्नम् ॥

मादुःखशब्दा कचि लोकि भान्तु
मात्रेक सत्त्वः प(प्र)तिकूलदर्शी
सर्व्वे च ते भान्तु उदारवर्णाः
प्रभङ्करा भान्तु परस्पराश्रयाः ॥

काचि सम्पत्ति मनुष्यलोके
मा तेषु भान्तु मनसोपपत्तिः ।
सर्व्वाभिप्रायाः सह चित्तमात्रैः
पुण्येन फलेन परिपूरयन्तु ॥

गन्धं च माल्यं च विलेपनं वा
धूपञ्च पूर्णं कुसुमञ्च पूर्णम् ।
त्रिकालदृष्टेभि प्रवर्षयन्तु
गृह्णन्तु ते सत्त्व भवन्तु तुष्टाः ॥

कुर्व्वन्तु पूजां दशसु दिशासु
अचिन्तियां सर्व्व तथागतानाम् ।
स बोधिसत्त्वानपि श्रावकानां
धर्म्मस्य बोधिप्रतिसृष्टि तस्य ॥

नीचां गतिं सर्व्वि विवर्ज्जयन्तु
भवन्तु अष्टाङ्गिकवीथिवृत्ता ।
आसादयन्तु जिनराजमूर्त्तिं
लभन्तु बुद्धेभिः सदासमागमम् ॥

उच्चैः कुलीना हि भवन्तु नित्यं
प्रभूतधर्म्मधनधान्यसमृद्धकोशाः ।
रूपेण वर्णेन यशेन कीर्त्या
समलङ्कृता भान्तु अनेककल्पाम् ॥

सर्व्वास्त्रियोनित्यरता भवन्तु
सुराश्च नराश्च विज्ञपण्डिताश्च ।
ते सर्व्वि बोधाय चरन्तु नित्यं
चरन्तु च पारमिता सुसंज्ञासु ॥

पश्यन्तु बुद्धान् दशसु दिशासु
रत्नोत्तमदृक्षसुखोपविष्टान् ।
वैदूर्य्यरत्नासनसन्निषण्णान्
शृण्वन्तु धर्म्मांश्च प्रकाश्यमानान् ॥

यानि च कर्म्माणि मयार्जितानि
पूर्व्वार्जितं यद्भवसङ्कटेषु ।
ये पापकर्म्माभिरता वदन्ते
ते सर्व्वे चीयन्तु च निरवातिशेषाः ॥

ये सर्व्वसत्त्वा भवबन्धनस्थाः
संसारजालैर्दृढबन्धबद्धाः ।
प्रज्ञाकरैर्भासिता मोचन्तु बन्धनात्
मुच्यन्तु दुःखेभ्यजा भवन्तु ॥

ये चापि सत्त्वा इह जम्बुद्वीपे
ये चापि अन्येषु च लोकधातुषु ।
कुर्व्वन्तु गम्भीरविचित्रपुण्यं
तत्सर्व्वपुण्यं ह्यनुमोदयामि ॥

ते नैव पुण्याभ्यनुमोदनेन
कायेन वाचा मनसार्जितेन ।
प्रणिधानसिद्धिः सफला ममास्तु
स्पृशेय बोधिं विरजामनुत्तराम् ॥

ये विन्दते तुष्यति दशबलान्
सदा च प्रसन्नशुद्धामलमानसेन ।
इमा ये परिणामनवर्गिताः
ये षष्टिं च कल्पां जहते अपायान् ॥

एतेभिः श्लोकेभिः च वर्णितेभिः
पुरुषा स्त्रियो ब्राह्मणक्षत्रिया वा ।
ये स्तोष्यते मुनिं कृताञ्जलिभिः
स्मरिष्यति सर्व्वत्र जातिस्मरशतजातिषु ॥




सर्व्वाङ्गसर्व्वेन्द्रियशोभिताङ्गः
विचित्रपूर्णैर्भिगुणैरुपेतः ।
नरेन्द्रराजैश्च संपूजितः
सदा एतादृशो भेष्यति तत्र तत्र ॥

न तैरेकस्य बुद्धस्य अन्तिके कुशलं कृतम् ।
द्वयोरपि त्रयेषु न पञ्चसु न दशसु ॥

तथा बुद्धसहस्राणामन्तिके कुशलं कृतम् ।
येषामिदं कर्णपुटे देशनं संप्रविश(श्य)तीति ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजदशनाम-
परिवर्त्तो नाम चतुर्थः ॥

---

अथ खलु भगवां स्तां बोधिसत्त्वसमुच्चयां कुलदेवतामेतदवोचत् । तेन खलु पुनः कुलदेवता कालेन तेन समयेन राजा सुवर्णभुजेन्द्रोनामासीदनेन कमलकलेन सर्व्वतथागतस्तवेनातीतानागतप्रत्युत्पन्नान् बुद्धान् भगवतोऽभ्यष्टावीत् ॥

ये जिनपूर्व्वका ये च भवन्ति
ये च ध्रियन्ते दशदिशि लोके ।
ते ये जिनान् करोमि प्रणामं
तं जिनसंघमहं प्रभजिष्ये ॥

शान्तप्रशान्तविशुद्धमुनीन्द्रं
सुवर्णवर्णप्रभासितगात्रम् ।
सर्व्वसु वा सुरसुस्वरबुद्धं
ब्रह्मरुतस्वरगर्ज्जितघोषम् ॥

पद्मदमौरमहीरुहकेशं
नीलसुकुञ्चितकेशनिकाशम् ।
शंखतुषारसुयासुलदन्तं
हेमविराजितभासितनाभम् ॥

नीलविशालविशुद्धनेत्रं
नीलमिवाम्बलप्रच्युढिभारम् ।
पद्मसुवर्णविशालसुजिह्वं
पद्मप्रभाश्रितपद्मसुखाभम् ॥

शंखमृणालनिभामुखतीर्णं
दक्षिणावर्त्तितवेरुलिवर्णम् ।
सूर्य्यनिशाक(र)लचीणशशी च
नात्र मुनेर्भ्रमराद्भुलनाभम् ॥

काञ्चनकोटिसुवर्णमृदुरं
नाशमुखोन्नतया तपतीर्णम् ।
अग्रधराग्रविशिष्टनाशाग्रं
मृदुकसर्व्वजिनांशसततम् ॥

एकसमेकतरामसुखाग्रवालं
सुरामप्रदक्षिणवक्रम् ।
नीलनिभोज्ज्वलकुण्डलजातं
नीलविराजितमालसुग्रीवम् ॥

जातसमानप्रभाषितगात्रं
पूजित सर्व्वि दशदिशि लोके ।
. . . . . . .
. . . . . . . ॥

दुःखमनन्तप्रशान्तत्रिलोकं
सर्व्वसुखेन च तर्पितसत्त्वम् ।
नरकगतिष्वथ तिर्य्यगतिषु
प्रेतसुरमनुजगतिप्रेतेषु च ॥

सर्व्वसुखार्पितसत्त्वं
सर्व्वप्रशान्तक्षतं अपापगतिषु ।
वर्णसुवर्णकनकनिभासं
काञ्चनतप्तप्रभासितगात्रम् ॥

सौम्यशशाङ्कसुविमलवक्त्रं
विकाशितराजितसुविमलवदनम् ।
तरुणरुहाङ्गकामलगात्रं
सिंहमिवाक्रमविक्रमनागम् ॥

ललितहस्तप्रालम्बितबाहुं
मारुतप्रेरितशाललतेव
व्यामप्रभोज्ज्वलसूचितरश्मिम् ।
सूर्य्यसहस्रमिव प्रेतयन्त्वं
निर्म्मलगात्रवरेभि सुनीन्द्रम् ॥

सर्व्वप्रभासितक्षेत्रमनन्तं
चन्द्रनिशाक(र)लभास्करजालम् ।
क्षेत्रमनन्तसहस्रशतेषु
ते ऽपिच निष्ठितसर्व्वमभूपि ॥

ते बुद्धप्रभासचिरावनतार्ये
बुद्धदिवाकरलोकप्रदीपम् ।
बुद्धदिवाकरसहस्रशतं
क्षेत्रमनन्तसहस्रशतेषु ॥

पश्यतु सत्त्वेषु तथागतसूर्य्यं
पुण्यसहस्रशताविकाशम् ।
सर्व्वगुणेभिरलङ्कृतगात्रं
शौण्डगजेन्द्रमिभं जितसाङ्गम् ॥

विमललक्षणमण्डितहस्तं
भूमितलाग्रमयसारितलुल्यम् ।
सूक्ष्मरजाग्रमयगतबुद्धाः
सूक्ष्मरजाग्रमये प्रभवन्ति ॥

सूक्ष्मरजाग्रमये च तिष्ठन्ति
ते ये जिनान् न करो(ति)मि प्रणामम् ।
कायेन वाचा मनेन (मनसा) प्रपन्नः
पुष्पप्रदानसुगन्धप्रदानैः ॥

वर्णशतेन सुचेतसि नापि
जिह्वाशतैरपि बुद्धगुणानि ।
कल्पसहस्रशतेन हि वक्तुं
ये गुणसाधुनिष्ठन्ति जिनानाम् ॥

सा च वराग्रविचित्र अनेकैः एकजिनस्य
गुणान् प्रख्यामि जिह्वासहस्रैर्भाषितुं किञ्चित् ।
कामसमग्रन्द्रि हि सर्व्वजिनानां
एकगुणस्य दिविखरे वक्तुम् ॥

सर्व्वसदेवकुलोकसमूहः
सर्व्वभवाग्रभवजलाग्रपूर्णा ।
न्यलयसर्पेतु शक्यं प्रमातुं
नैव च एकगुणाः सुगतानाम् ॥

वर्णितुं संस्तुतसजिनसर्व्वं
कायेन वाचा प्रसन्नमनेन ।
प्रशमय सञ्चितपुण्यफलापं
तेन च सत्त्वं प्रभातु जिनत्वम् ॥

एवं स्वविलेन नरयति बुद्धं
एवं करोति नृपः प्रणिधानम्।
यत्र कुत्रचि मह्यं भवेत जाति
अनागत कल्पमनन्ता॥

इह अभरी (अर्व्यर्थाम्) पश्यमि स्वप्नं
इह स्वदेशे न तत्र शृणोमि।
ईदृशे जिने तु स्तुतिकमलाकर राजा
जातिषु जातिषु तत्र लभेयम्॥

बुद्धगुणानिमनन्तमतुल्या
येऽपि च दुर्लभकल्पसहस्रैः।
असुश्रुणेये च दुःखप्रगतापि
तेषु न देशेऽपि दिवसं गतापि॥

दुःखसमुद्रविमोचयि सत्त्वा
पूरोयपश्चिरेऽपि पारमिताभिः।
बोधिमनुत्तरे पश्च पश्च लभेयं
यत्र भवेऽत्र समा असयेथा॥

भेरीप्रदानविपाकफलेन
सर्व्वजिना नरसस्तुतिहेतोः।
सम्मुखे पश्यसि शाक्यमुनीन्द्रं
व्याकरणं च्युङ तत्र लभेयम्॥

य इमौ दारकौ द्वौ मम युतौ
कनकेन्द्रं कनकप्रभास्वरम्।
त उभिदारक तत्र लभेयं
बोधिमनुत्तरव्याकरणञ्च॥

येऽपि च सत्त्वा अनेन अचान्या
शरणविहीनव्यसनगताश्च ।
तेषु भवेय अनागत सर्व्वत्र
शयरोपणशरणेभिश्च ॥

दुःखसमुद्भवसंचयकर्त्ता
सर्व्वसुखस्य च आकरभूत ।
कल्पअनागतबोधिचरेयं
यत्तिकपूर्व्वकोटिगताश्च ॥

स्वर्णप्रभासोत्तमदेशनताये
पापसमुद्रं शोषतु मह्यम् ।
कर्म्मसमुद्रे विकीर्य्यतु मह्यं
क्लेशसमुद्रा च छिद्यतु मह्यम्

पुण्यसमुद्रं प्रपूर्य्य मह्यं
ज्ञानसमुद्रे तु विशोध्यतु मह्यम् ।
विमलज्ञानप्रभासचरेण
सर्व्वगुणा न समुद्रभवेया ॥

बोधिगुणैर्गुणरत्नसपूर्णा
देशनसुवर्णप्रभासबलेन ।
पुण्यप्रभासे भविष्यति मह्यं
बोधिप्रभासे विशोध्यतु मह्यम् ॥

विमलज्ञानप्रभासवरेण
कायप्रभासे भविष्यति मह्यम् ।
पुण्यप्रभासविरोचनता च
सर्व्वत्रिलोकविशिष्टो भवेयम् ॥

पुण्यचरेण समन्वितनित्यं
दुःखसमुद्र-उत्तारयिता च।
सर्व्वसुखस्य च सागरता च
कल्पमनागतबोधिचरेयम् ॥

यन्मेकपूर्व्वककोटिगतायं
यादृशचत्रविशिष्टचिलोके।
सर्व्वजिनानमनन्तगुणेन
तादृशचत्रमनन्तगुणां च ॥

ते गतिमह्यमनागतसर्व्वः ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजकर्म्मलाकरो नाम
सर्व्वतथागतस्तवपरिवर्त्तो नाम पञ्चमः ॥

---

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत। अनेकेषु सूत्रेषु अचिन्तितेषु अतिविस्तरं देशिताः शून्यधर्म्माः। तस्माद्देशितसूत्रवरोत्तमे च संक्षेपतो देशिताः शून्यधर्म्माः ॥

अन्यैरुपायैर्नयहेतुभिश्च
सत्त्वा न कारुण्यरसोद्यार्थम्।
प्रकाशितं सूत्रवरेन्द्रमेतं
यथाभिजानन्ति हि सर्व्वसत्त्वाः ॥

अयं च कायायाथर्व्वशून्यग्रामः
संग्रामचौरा यम-इन्द्रियाणि।
तान्येकग्रामे निवसन्ति सर्व्वे
न ते विजानन्ति परस्परेण ॥

चक्षुरिन्द्रियं रूपमेतेषु
धावति श्रोतेन्द्रियं शब्दविचारेण ।
घ्राणेन्द्रियं गन्धविचित्रहारि
जिह्वेन्द्रियं नित्यं रसेषु धावति ॥

कायेन्द्रियं स्पर्शगतो धावति
मनेन्द्रियं धर्मविचारेण च ।
षडिन्द्रियाणीति परस्परेण
स्वकं स्वकं विषयमभिधावति ॥

चित्तं च मायोपमचञ्चलञ्च
षडिन्द्रियं विषयविचारणञ्च ।
यथा नरो धावति शून्यग्रामे
संग्रामचौरेभिः समाश्रितञ्च ॥

प्रजानते इन्द्रियगोचरं च
चित्तं यथा षड्विषयाश्रितं च ।
प्रजानते इन्द्रियगोचराय
रूपं च शब्दं च तथैव गन्धम् ॥

रसं च स्पर्शं च तथधर्म गोच(र)लं
चित्तं च सर्व्वत्र षडिन्द्रियेषु ।
शकुनिरिव चञ्चल-
श्चेतेन्द्रियसंप्रविष्टम् ॥

यत्र षडेन्द्रियसंश्रितं च
नरेन्द्रियं सुवभुजानमर्मासकम् ।
कायश्च निश्चेष्ट निर्व्यापारं च
अमारकः प्रत्ययसम्भवञ्च ॥

अशाश्वतकल्पसमन्वितश्च स्थितकायस्तु इव शून्यग्रामः।
चित्यप्तेजसलिलानि यथा चौरग्रामान्तः॥

स्थितदेशदेशे परस्परेणैव सदा विबुद्धा
यथैव आशीविष एकवेश्मनि।
धातुरगास्तदेवन्तु विधानि ऊर्द्धगामीदयेषुगामी च
दयाद्वयं दिशविदिशासु सर्व्वं॥

नश्यन्ति तैधातु भुजङ्गमाणि
चित्युरगश्च सलिलोरगश्च।
इमौ च देश्वाचयतां व्रजेत
तेजोरगाश्चानिलमारुतोरगाश्च॥

इमौ हि ऊर्द्धगती नमोन्ति
चित्तं च विज्ञानमध्ये स्थितं च।
गत्वा यथा पूर्व्वकृतेन कर्म्मणा
देवमनुष्येषु च चिम्बपाया॥

यथाकृतं पूर्व्वभावे प्रवर्ज्यां
श्लेश्मानि लङ्घयितुं चयान्तप्राप्तः।
कफश्लेश्ममूत्रपूरीषपूर्णानि
नाभिलश्च कृमिचुद्रभृतम्॥

चिप्तः श्मशाने यथ काष्ठभूतः
यस्या हि त्वं देवत एभि च।
कतिरोन सत्त्वस्तथा पुद्गलो वा
शून्या हि ते ते खलु सर्व्वधर्म्मा॥

अविद्यत प्रत्ययसम्भवाश्च
एते महाभूतसम्भवाश्च।
तस्मान्महाभूततया प्रकृतिभावाः
तस्माद्यभूताद्धि असम्भवाश्च ॥

अविद्यमाने कदाचिद्विद्यते
अविद्यतप्रत्ययसम्भवाश्च ।
अविद्यमानैवमविद्यया च
तस्मान्मया उक्त अविद्य एषा ॥

संस्कारविज्ञानसनामरूपं
षडायतस्पर्शतथैव वेदना ।
तृष्णा उपादान तथा भवता
जातिजरामरणशोकउपद्रवाणाम् ॥

दुःखानि संस्कारअचिन्तितानि
संसारचक्रे च यथा स्थितानि ।
अभूतसम्भूतअसम्भवाश्च
अयानिशं चित्तविचारणं तथा ॥

दृष्टिगतं स्थास्थथ आत्मनो
ज्ञानासिना छिन्दथ क्लेशजालम् ।
स्कन्धालयं पश्यथ शून्यभूतं
स्पृशत तं च बोधिगुणं ह्युदारम् ॥

विवृतं चेमे अमृतपूरस्य
द्वारं सन्दर्शितं अमृतपूरस्य ।
भोजनं प्रवेक्ष्यते अमृतापूरालयं शुभं
तेऽप्यस्याहं अमृतरासन-आत्मनोपरा ॥

हताम वरधर्मभेरी
आपूरिताम वरधर्मशङ्खः ।
प्रज्वालिताम वरधर्मउल्का
सुवर्षितं मे वरधर्मवर्षम् ॥

पराजिताम वरक्लेशशत्रवः
उच्छ्रयिताम धर्मध्वजं ह्यनुत्तरम् ।
प्रतारिताम सत्त्वं भवसमुद्राः
पिथितानिम त्रीन्यपापपथानि ॥

क्लेशाग्निदाह शमयित्व प्राणिनां
यस्मार्थपूर्व्वमहमनेककल्पा ।
अचिन्तिया पूजित नायक हि
चरित्व बोधाय दृढव्रतेन ॥

सद्धर्मकायपरिवेषयमाणो
हस्तौ च पादौ च परित्यजित्वा ।
धनहिरण्यमणिमुक्तिभूषणं
नयनोत्तमां शयियपुत्रम् ॥

सुवर्णवैदूर्य्यविचित्ररत्नानि
छिन्दित्वा त्रिसाहस्रायाम् ।
सर्व्वतृचहणवनस्पतिभ्यः
सर्व्वं च धरणीरुहं चूर्णयित्वा च ॥

तत्सर्व्वं कुर्य्याच्छूक्ष्मरजोपमम् ।
चूर्णराशिं करित्वातु यावदाकाशगोचरम् ॥

चित्रकाभागभिन्नाश्च धरणीरजसमानिता ।
सर्व्वसत्त्वाश्चिणकेभिन्नानेचेतनेनरैः ॥

सर्व्वं गणयितुं शक्यं न तु ज्ञानं जिनस्य च ।
एकक्षणप्रवृत्तन्तु सज्ञानञ्च महामुनेः ॥
अनेककल्पकोटिषु न शक्यं गणयितुं क्वचित् ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजशून्यतापरिवर्त्तो
नाम षष्ठमम् ॥

---

अथ खलु वैश्रवणो महाराजो धृतराष्ट्रो महाराजो विरूढको महाराजो विरूपाक्षो
महाराज उत्थायासनेभ्य एकांशेन चीवराणि प्रावृत्य दक्षिणजानुमण्डलानि पृथिव्यां प्रति-
ष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् ।
अयं भगवन् सुवर्णप्रभासोत्तमसूत्रेन्द्रराजः सर्व्वतथागताभिलोकितः सर्व्वतथागत-
समन्वागतः सर्व्वबोधिसत्त्वगणनमस्कृतः सर्व्वदेवेन्द्रगणसंप्रहर्षक. सर्व्वलोकपालस्तुतः सुवि-
चित्रवर्णितः प्रशंसितः सर्व्वदेवभवनाभासितः सर्व्वसत्त्वानां परमसुखप्रदायकः सर्व्वनरक-
तिर्य्यक्योनियमलोकदुःखसंशोषकः सर्व्वभयप्रतिशमनः सर्व्वपरचक्रप्रतिनिवर्त्तकः दुर्भिक्ष-
कान्तारप्रशमनो व्याधिकान्तारप्रणाशको ध्यानसर्व्वयशः-प्रकाशकः परमशान्तिकरः शोकायास-
प्रशमनो विविधनानोपद्रवप्रशमयिता उपद्रवशतसहस्रप्रणाशयिता इमस्य भदन्त भगवन्
सुवर्णप्रभासोत्तमसूत्रेन्द्रराजस्य तेषां च सूत्रेन्द्रधारकाणां विस्तरेण पर्षदि संप्रकाश्यमान-
स्यास्माकं चतुर्णां महाराजानां सबलपरिवाराणां एतेन च धर्म्मश्रवणेन धर्म्मामृतरसेन च मे
दिव्यात्मभावा महौजसो विवर्द्धयिष्यन्ति ।
अस्माकं कार्यं च यलश्च स्थामवर्णं जनितं भविष्यति । तेजश्च श्रियश्च लक्ष्म्यो
स्माकं कार्य्यमादिशन्ति । वयं भगवन् चत्वारो महाराजानो धार्म्मिकाश्च धर्म्मवादिनश्च धर्म्म
राजा धर्म्मेण वयं भदन्त भगवान् देवनागयक्षगन्धर्व्वासुरगरुडकिन्नरमहोरगानां राजा
कारयिष्यामः । ते वयं भगवन् चत्वारो महाराजाः सार्द्धमष्टाविंशतिमहायक्षसेनापतिभिरने
केश्च यक्षशतसहस्रैः सततमिमं सर्व्वजम्बुद्वीपं दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यके
णावलोकयिष्यामः आरक्षयिष्यामः परिपालयिष्यामः तेन हेतुना भदन्त भगवन्नस्माकं चतुर्
महाराजानां लोकपाल इति संज्ञोत्पादिता । ये केचिद्भदन्त भगवन् अस्मिन् जम्बुद्वी
विषयाः परे च क्लेशोपहता भविष्यन्ति दुर्भिक्षकान्तारेण वा नानाविधैरुपद्रवश
तोपद्रवसहस्रैरुपद्रुता भविष्यन्ति । वयं भदन्त भगवन् चत्वारो महाराजा अस्य सुवर्णप्रभा
सोत्तमस्य सूत्रेन्द्रराजस्य तेषां च सूत्रेन्द्रधारिणां भिक्षूणां संचोदनां करिष्यामः ।

यदा चेमे भदन्त भगवन् धर्मभाणका भिक्षवोऽस्माकं चतुर्णां महाराजानां संचोदनया बुद्धाधिष्ठानेन च येषु येषु विषयेषूपसंक्रमेयुस्तेषु तेषु विषयेषु चेमं च सुवर्णप्रभासोत्तमसूत्रेन्द्रराजं विस्तरेण संप्रकाशयेयुः। य इमान्येवंरूपाणि विषयशतानि नानाविधान्युपद्रवशतानि उपद्रवसहस्राण्युपद्रवशतसहस्राणि च प्रशमयिष्यन्ति। यस्य च भदन्त भगवन् मनुष्यराजस्य विषये ते सूत्रेन्द्रराजधारका भिक्षवो धर्मभाणका उपसंक्रान्ता भविष्यन्ति॥ अयं मनुष्यराजः। इमं सुवर्णप्रभासोत्तमसूत्रेन्द्रराजं शृणुयात् श्रुत्वा च तेषां सूत्रेन्द्रधारकाणां भिक्षूणां सर्वेभ्योऽर्थिकेभ्य आरक्षां कुर्यात् परित्राणं परिग्रहं परिपालनं कुर्यात्। ते वयं भदन्त भगवं श्चत्वारो महाराजास्तस्य मनुष्यराजस्य सर्वविषयगतानां च सत्त्वानां आरक्षां करिष्यामः परित्राणं परिग्रहं परिपालनं शान्तिस्वस्त्ययनं करिष्यामः। यदा च भदन्त भगवन् मनुष्यराजः सूत्रेन्द्रधारकाणां भिक्षुभिक्षुण्युपासकोपासिकानां सर्वसुखोपकरणैः सुखतां कुर्यात्॥ ते वयं भदन्त भगवं श्चत्वारो महाराजास्तं मनुष्यराजं सर्वराजेभ्यः ‑स्कृततरं करिष्यामो गुरुकृतं करिष्यामो मानितं च पूजितं च सर्वविषयेषु च प्रशंसनीयं च ‑रिष्यामः॥

अथ खलु भगवां श्चतुर्णां महाराजानां साधुकारमदात्। साधु साधु महाराजाः साधु ‑धु युष्माकं महाराजाः यथापि ते यूयं पूर्वजिनकृताधिकारा अवरोपितकुशलमूला बहु ‑द्धकोटिनियुतशतसहस्रपर्युपासिता धार्मिकाश्च धर्मवादिनश्च धर्मेण देवानां च ‑नुष्याणां च राजत्वं कारयध्वं यथापि नापूर्वं दीर्घरात्रं सर्वसत्त्वानां हि ते चित्ताः सुख‑ ‑त्रीचित्ताः सर्वसत्त्वहितसुखाध्याशयप्रतिपन्नाः सर्वाहितप्रतिषेधकाः सर्वसत्त्वानां सर्व‑ हितोपसंहाराभियुक्तास्ते यूयं चत्वारो महाराजानः तेषां मनुष्यराजस्य च सुवर्णप्रभासोत्तम‑ ‑त्रेन्द्रराजस्य पूजासंस्काराभियुक्तानामारक्षां करिष्यथ परित्राणं परिग्रहं परिपालनं शान्तिं ‑स्त्ययनं करिष्यत। तेन युष्माभिश्चतुर्महाराजैः सबलपरिवारैरनेकैश्च यक्षशतसहस्रै‑ रतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां धर्मनेत्री आरक्षिता भविष्यति परिपालिता च ‑रिगृहीता च भविष्यति। तेन युष्माकं चतुर्णां महाराजानां सबलपरिवाराणामनेकेषां यक्ष‑ ‑तसहस्राणां देवानां देवासुरसंग्रामसमभिरूढानां जयो भविष्यति। असुराणां च पराजयो ‑विष्यति॥ धर्मबलेभ्यः सर्वपरचक्रप्रमथकस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्यार्थाय तेषां ‑त्रेन्द्रधारकानां भिक्षुभिक्षुण्युपासकोपासिकाणामारक्षां करिष्यथ परिग्रहं परिपालनं ‑ान्तिस्वस्त्ययनं करिष्यत।

अथ वैश्रवणो महाराजो धृतराष्ट्रो महाराजो विरूढको महाराजो विरूपाक्षो महा‑ ‑ाज उत्थायासनेभ्यः एकांशानि चीवराणि प्रावृत्य दक्षिणानि जानुमण्डलानि पृथिव्यां ‑तिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्॥ अयं भदन्त भगवन् सुवर्ण‑ ‑भासोत्तमसूत्रेन्द्रराजोऽनागतेऽध्वनि यत्र ग्रामनगरनिगमजनपदराष्ट्रराजधानीषु प्रचरिष्यति। ‑स्य यस्य मनुष्यराजस्य विषयमनुप्राप्तो भविष्यति। कश्चिद्भदन्त ,भगवन् मनुष्यराजो भवन् ‑नानेन देवेन्द्र! समयेन राजशास्त्रेण राजत्वं कारयन् अस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य ‑ोता भवंस्तांश्च सूत्रेन्द्रधारका भिक्षुभिक्षुण्युपासकोपासिकाः सत् कुर्यात् गुरुकुर्यान्मानयन्

पूजयन् सततममितं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं शृणुयात्। अनेन धर्मश्रवणेन संचोदन- धर्मामृतपुण्यात्मकानामस्माकं चतुर्णां महाराजानां सबलपरिवाराणामनेकेषां च यक्षशतसहस्राणां इमान् दिव्यात्मभावान् महतौजसा विवर्द्धयेत्॥ महान्तं वीर्यबलस्थामबलं चास्माकं कायेषु तेजः श्रियश्च लक्ष्मीश्चास्माकं विवर्द्धयेत्। तेन वयं भदन्त भगवंश्चत्वारो महाराजाः सबलपरिवारा अनेकैर्यक्षशतसहस्रैरदृश्यद्भिः कायात्मभावैरेतर्हि चानागतेऽध्वनि यत्र ग्रामनगरनिगमजनपदराष्ट्रराजधानीषूपसंक्रमिष्यामः। तत्रायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः प्रचरिष्यति तेषां च मनुष्यराजानामस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य श्रोतॄणां पूजयितॄणां चाल(र)क्षां करि(रि)ष्यामः। परित्राणं परिग्रहं परिपालनं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं च करिष्यामः। तेषां च कुलानां तेषां च राष्ट्राणां तेषां च विषयाणां चारक्षां करिष्यामः परित्राणं परिग्रहं परिपालनं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं करिष्यामः। तं च विषयं सर्व्वभयायासेभ्यः परिमोचयिष्यामः। परचक्राणि च प्रतिनिवर्त्तयिष्यामः यः कश्चित्तस्य मनुष्यराजस्यास्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य श्रोतुर्मानयितुः पूजयितुः॥ अ(स्य)त्यः सामन्तकः प्रतिशत्रुराजो भवेत्। यदा च भदन्त भगवंस्तस्य सामन्तकस्य प्रतिशत्रो राज्ञः एवं चित्तमुत्पद्येत सोऽहं चतुरङ्गेण बलकायेन सार्द्धमस्य विषयमुपसंक्रमेयं विनाशयितुम्॥

तेन खलु पुनर्भदन्त भगवन् कालेन तेन समयेनास्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य तेजोऽनुभावेन तस्य सामन्तकस्य प्रतिशत्रुराजस्यान्यैराजभिः सार्द्धं संग्रामो भविष्यति॥ स्वविषयगतास्वविषयविलोपाश्च भविष्यन्ति दारुणाश्च राजसङ्क्षोभा भविष्यन्ति ग्रहरोगाश्च विषयप्रादुर्भूता भविष्यन्ति नानाव्याधिशतानि विषयप्रादुर्भूतानि भविष्यन्ति। यदा च भदन्त भगवंस्तस्य सामन्तकस्य प्रतिशत्रुराजस्य स्वविषयगतानि एवं रूपाणि नानोपद्रवशतानि नानाव्याक्षेपशतानि भवेयुः॥ स च भदन्त भगवन् सामन्तकप्रतिशत्रुराजश्चतुरङ्गिणीं सेनां योजयित्वा परचक्रगमनाय स्वविषयान्निष्क्रान्तो भवेत् यत्रायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजो भवेत्। स प्रतिशत्रुराजः सार्द्धं चतुरङ्गबलकायेन तं विषयमुपसंक्रमितुकामो भवेत् विनाशयितुकामो भवेत् तत्रैवं भदन्त भगवंश्चत्वारो महाराजाः सबलपरिवाराः अनेकैर्यक्षशतसहस्रैरदृश्यैरात्मभावैस्तत्रोपसंक्रमिष्यामः। तं परचक्रमाध्वानं मार्गप्रतिपन्नं तत्रैव प्रतिनिवर्त्तयिष्यामो नानाव्याक्षेपशतानि नोपसंहरिष्यामो विघ्नांश्च करिष्यामः। यथा तत् परचक्र न शक्नोति तत्र विषय उपसंक्रमितुं। कुतः पुनर्विनाशं करिष्यति॥

अथ भगवांस्तेषां चतुर्णां महाराजानां साधुकारमदात्। साधु साधु महाराजाः साधु खलु पुनर्युष्माकं महाराजानां यद्यूयमस्या अचिन्त्यकल्पकोटिनियुतशतसहस्रसमुदानीतायाः अनुत्तरायाः सम्यक्सम्बोधेरर्थाय तेषां तेषां मनुष्यराजानामस्य च सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य श्रोतॄणामारक्षां करिष्यथ परित्राणं परिग्रहं परिपालनं शान्तिस्वस्त्ययनं करिष्यथ तानि च राजकुलानि च तानि च नगराणि तानि च राष्ट्राणि तानि च विषयाणि आरक्षयिष्यथ परित्राणं परिपालनं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं करिष्यथ॥ तानि च विषयाणि सर्व्वभयोपद्रवोपसर्गोपायासेभ्यः परिमोचयिष्यथ परचक्राणि च निवर्त्तयिष्यथ॥

सर्व्वजम्बूद्वीपगतानां चास्य मनुष्यराजस्य अकलया भण्डनया विग्रहया विवादया औत्सुक्यमापद्य ॥ यथाच ते युष्माकं चतुर्णां महाराजानां सबलपरिवाराणां अस्मिन् जम्बूद्वीपे तेषु चतुर्षु नगरसहस्रेषु तानि चतुरशीतिनगरसहस्राणि तेषु तेषु विषयेष्वभिरमेयुस्तेन च राज्यैश्वर्य्येणाभिरमेयुस्तेन च धर्म्मस्कन्धेन परस्परं न विहेटयेयुः ॥ न परस्परं विहेटं ज(ग)मयेयुः ॥ स्वेन च यथापूर्व्वं कर्म्मोपचयेन राजत्वं प्रतिलभेयुः ॥ स्वेन च राज्यैश्वर्य्येण च तुष्टा भवेयुः ॥ न च परस्परेण विनाशयेयु र्न विषयविनाशाय पराक्रमेयुः ॥ यथा चास्मिन् जम्बुद्वीपे तेषु चतुरशीतिषु विषयनगरसहस्रेषु तानि चतुरशीतिराजसहस्राणि परस्परेण हितचित्तानि सुष्टुचित्तानि परस्परेणाकलहताड़नया भण्डनया विग्रहया विवादया स्वेषु स्वेषु विषयेष्वभिरमेरन् ॥ तेन चतूर्णां महाराजानां सबलपरिवाराणां अयं जम्बुद्वीपः स्फीतो भविष्यति सुभिक्षश्च रमणीयश्च बहुजनसमाकीर्णश्च अद्धश्चोजोवत्तरेण भविष्यति ॥ अतोभविष्यति सुभिक्षश्च रमणीयश्च ... अहोरात्रं ग्रहमासार्द्धं माससम्वत्सराणि च सर्व्वाणि समाचारयुक्तानि भविष्यन्ति ॥ अहोरात्रं ग्रह-मासार्द्धं माससम्वत्सराणि च सर्व्वाणि समाचारयुक्तानि भविष्यन्ति ॥ कालेन च वर्षधाराः पृथिव्यां निपतिष्यन्ति सर्व्व नक्षत्रचन्द्रसूर्य्याश्च समाग्रहिष्यन्ति ॥ कालेन च वर्षधाराः पृथिव्यां निपतिष्यन्ति सर्व्व जम्बुद्वीपगतानि ससत्त्वानि सर्व्वधनधान्यसमृद्धानि भविष्यन्ति महाभागानि चामत्सराणि भविष्यन्ति परित्यागवन्ति दशकुशलकर्म्मपथसमन्वागतानि भविष्यन्ति ॥ यद्भूयसा सुगताः स्वर्गलोके उपपत्स्यन्ते । देवभुवनानि चाकीर्णानि भविष्यन्ति देवैर्देवपुत्रैश्च ॥ यत् कश्चिन्महाराजो भवेत् ॥ य इत्यमस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य श्रोता भवेत् । मानयिताच पूजयिताच तेषां च सूत्रेन्द्रधारकाणां भिक्षुभिक्षुण्युपासकोपासिकानामौत्सुक्यं सत् कुर्य्यात् गुरुकुर्य्यान्मानयेत् पूजयेत् ॥ युष्माकं चतूर्णां महाराजानां सबलपरिवाराणामनेकेषां च यक्षशतसहस्राणामनुकम्पार्थाय सततसमितं धर्म्मं सुवर्णप्रभासोत्तमं सूत्रराजेन्द्रं शृण्वन् अनेन धर्म्मश्रवणसलिलोदकेन युष्माकमेतान्यात्मभावानि सन्तर्पयेत् ॥ महतौजसा युष्माकमेतानि शरीराणि विवर्द्धयेत् महच्च युष्माकं वीर्य्यं च स्थामबलं च वपुषः संजनयेत् ॥ तेजश्च श्रियश्च लक्ष्मीश्च युष्माकं विवर्द्धयेत् ॥ तेन च मनुष्यराजेन मम शाक्यमुनेस्तथागतस्यार्हतः सम्यक् सम्बुद्धस्याचिन्त्या महाविपुलविस्तीर्णा पूजा कृता भविष्यन्ति ॥

तेन च मनुष्यराजेनातीतानागतप्रत्युत्पन्नानां बुद्धानामनेकेषां तथागतानां कोटिनियुतशतसहस्राणामचिन्त्या महती विस्तीर्णा सर्व्वोपकरणैः पूजाकृता भविष्यति ॥ तेन तस्य मनुष्यराजस्य महत्यारक्षा कृता भविष्यति ॥ तेन च तस्य राज्ञा रक्षां परित्राणं परिग्रहं परिपालनं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं कृतं भविष्यति ॥ अग्रमहिष्याश्च राजपुत्राणां च सर्व्वान्तःपुरस्य च राजकुलस्य च सर्व्वस्य महत्या रक्षा कृता भविष्यति ॥ राजकुलनिवासिन्यश्च सर्व्वपरित्राणं परिग्रहं परिपालनं शान्तिशस्त्ययनं कृतं भविष्यति ॥ राजकुलनिवासिन्यश्च सर्व्वदेवता या या चत्वारश्च चित्तेन सुखसौमस्येन समन्वागता भवितारो रतिमनुभविष्यन्ति ॥ तानि च राष्ट्राणि तानि च विषयाणि चारक्षितानि भविष्यन्ति परिपाचिता चानुत्पीड़ितानि चाकण्टकानि च भविष्यन्ति सर्व्वपरचक्रानवमर्द्दितोविस्तीर्णापरिमितपुण्यस्कन्धःपरिस्पृष्टौतो भविष्यति ॥ अद्य मम सर्व्वान्तपुरस्य महत्या रक्षाकृता भविष्यति ॥ अद्य मम राजकुले अचिन्त्या मम विशिष्टानुत्तरा महती शान्तिकृता भविष्यति स्वस्त्ययनं च ॥ अद्य ममापं

सर्व्वविषय आरक्षितो भविष्यति ॥ परिवाचितश्चानुत्पीडितश्चानुत्क्लिष्टश्च सर्व्वपरचक्रा-
नवमर्द्दितश्चानुपसर्गश्चानुपायासश्च भविष्यति ॥ यदा च महाराजः स मनुष्यराजोऽनेनैव
रूपेण सद्धर्म्मगौरवेण सुवर्णप्रभासोत्तमसूत्रेन्द्रराजधारका भिक्षुभिक्षुण्युपासकोपासिकाः सत्
कुर्य्यात् गुरु कुर्य्यात् मानयेत् युष्माकं चतुर्णां महाराजानां सबलपरिवाराणां तेषां च
देवगणानामनेकेषां च यक्षशतसहस्राणां महारत्नच्छत्राणि संस्थास्यन्ति ॥ उदारोदाराणां च
गन्धा न प्राप्स्यन्ति सर्व्वदेवभवनेषु सर्व्वसुवर्णवर्णावभासः प्रादुर्भविष्यति । तेन चावभासेन
सर्व्वदेवभवनान्यवभासितानि भविष्यन्ति ॥ यथा त्रिसाहस्रमहासाहस्रायां लोकधातौ ॥
सर्व्वदेवभवनानि सुपर्य्यन्तरीक्षे तानि नानागन्धधूपलताच्छत्राणि संस्थास्यन्ति ॥ तथाश्च
महाराजाः सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य तेजसा वरसहस्रधूपिता तेन मनुष्यराज्ञेन ।
नानागन्धा अस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य पूजार्थाय ॥

नानागन्धधूपलताच्छत्राणि संस्थास्यन्ति तेन क्षणलवमुहूर्त्तेन समन्ताद्दशसु दिक्षु
अनेकेषु गङ्गानदीवालुकोपमेषु बुद्धक्षेत्रकोटिनियुतशतसहस्रेषु अनेकेषां गङ्गानदीवालुका-
समानानान्तथागतकोटिनियुतशतसहस्राणां सुपर्य्यन्तरीक्षे तानि नानागन्धधूपलताच्छत्राणि
संस्थास्यन्ति ॥ तेषु वालुकोपमेषु बुद्धकोटिनियुतशतसहस्रेषु दारोदारायान्नानागन्धधूपा-
नाघास्यन्ति ॥ सुवर्णवर्णमयावभासा प्रादुर्भविष्यन्ति ॥ तेन चावभासेन तान्यनेकानि गङ्गा-
नदीवालुकासमानि बुद्धक्षेत्रकोटिनियुतशतसहस्राण्यवभासितानि भविष्यन्ति ॥ समनन्तर
प्रादुर्भूतानि च महाराजा इमान्येव रूपाणि प्रातिहार्य्याणि तानि अनेकानि गङ्गानदीवालुका-
समानि बुद्धक्षेत्रकोटिनियुतशतसहस्राणि प्रतिष्ठिता स्तथागतास्तं च धर्म्मभाणकं समन्वा-
गता करिष्यन्ति ॥ साधुकाराणि च प्रदास्यन्ति साधु साधु सत्पुरुष! साधु पुनस्त्वं सत्पुरुष!
यस्त्वमिममेवं रूपं गम्भीरमेवं गम्भीरार्थमेवं गम्भीरावभासमेवमचिन्त्यगुणधर्म्मसमन्वागतं
सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं विस्तरेण सम्प्रकाशयितुकामः ॥ न चैते सत्त्वा इत्वरेण कुशल-
मूलेन समन्वागता भविष्यन्ति ॥ ये इमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं अन्तशः श्रोष्यन्ति
प्रागेवोद्ग्रहीष्यन्ति धारयिष्यन्ति लिखिष्यन्ति लिखापयिष्यन्ति वाचयिष्यन्ति पर्य्यवाप्स्यन्ति
विस्तरेण च पर्षदि संप्रकाशयिष्यन्ति पर्षदि देशयिष्यन्ति उद्देक्ष्यन्ति स्वाध्यायिष्यन्ति यानि
श्रोत्रमनसि भावयिष्यन्ति ॥ तत् कस्य हेतोः । सहस्रबलेनास्य पुरुषस्य सुवर्णप्रभासोत्तमस्य
सूत्रेन्द्रराजस्यानेकानि बोधिसत्त्वकोटिनियुतशतसहस्राणि अवैवर्त्तिकानि भविष्यन्ति
अनुत्तरायाः सम्यक् सम्बोधेः ॥

अथ खलु तानि समन्ताद्दशसु दिक्षु गङ्गानदीवालुकासमेषु बुद्धक्षेत्रकोटिनियुतशत-
सहस्रेषु अनेकानि तथागतकोटिनियुतशतसहस्राणि स्वकस्वकेषु बुद्धक्षेत्रेषु प्रतिष्ठितानि
तेन कालेन तेन समयेनैकपदेनैकवाचैकस्वरनिर्घोषेण तस्य धर्म्मभाणकस्य भिक्षोर्द्धर्म्मासन-
गतस्यैतदूचुः । उपसंक्रमिष्यसि त्वं सत्पुरुषानागतेऽध्वनि बोधिमण्डं प्रदर्शयिष्यसि त्वं
सत्पुरुष बोधिमण्डवराग्रगतो भूमिराजो मूलप्रविष्टः सर्व्वत्रैलोक्यप्रतिविशिष्टानि सर्व्वसत्त्वां-
स्त्रिकालान्तराणि व्रततपश्चरणबलधानान्यधिष्ठानानि अधिष्ठितान्यनेकानि दुष्करकोटि-
नियुतशतसहस्राणि समडूरिष्यसि त्वं सत्पुरुष बोधिमण्डं । परित्रायिष्यसि त्वं

सत्पुरुष सर्व्वांस्त्रिसाहस्रमहासाहस्रलोकधातून् ॥ पराजयिष्यसि त्वं सत्पुरुष द्रुमराजमूलोपविष्टः कृत्रिमरूपपरमविभत्सदर्शनं नानाविकृतरूपमचिन्त्यमारसैन्यं । अभिसम्भोत्स्यसि त्वं सत्पुरुष बोधिमण्डवराग्रगतोऽनुपमप्रशान्तविरजस्कगम्भीरमनुत्तरां सम्यक्सम्बोधिं ॥ प्रवर्त्तयिष्यसि त्वं सत्पुरुषार्य्यसारदृढवज्रासनोपविष्टः सर्व्वजिनाभिसंस्तुतं परमगम्भीरं द्वादशाकारमनुत्तरधर्म्मचक्रं ॥ पराणिवानुपसर्गानिवानुपायासानि चेति ॥

एवमुक्ते वैश्रवणो महाराजो धृतराष्ट्रो महाराजो विरूढको महाराजो विरूपाक्षो महाराजस्ते सर्व्वे भगवन्तमेतदवोचन् ॥ तेन भगवन् मनुष्यराजेन सुस्नातगात्रेण भवितव्यं सुगन्धवसनधारिणानेकरुचिरवस्त्रप्रावृतेन नानालङ्कारविभूषितेन भवितव्यम् । आत्मनश्च नीचतरमासनं प्रज्ञपयितव्यं तत्रासने निषेदित्वा राज्यमदमत्तेन न भवितव्यं नचोच्चैराज्ञा स्वयं ज्ञपयितव्या श्लाघ्यमानमदद्दर्पविवर्ज्जितेन चित्तेनायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः श्रोतव्यः तस्य च धर्म्मभाणकस्य भिक्षोरन्तिके शास्तृसंज्ञा उत्पादयितव्या ॥ तेन मनुष्यराजेन तस्मिन् काले तस्मिन् समये अग्रमहिषीराजपुत्राश्च राजदुहितरश्च सर्व्वान्तःपुरगणाश्च प्रियहिताभ्याम् प्रज्ञिसव्याः प्रियवचनैश्चाग्रमहिषीराजपुत्राश्च राजदुहितरः सर्व्वान्तःपुरगणाश्चालापयितव्याः । नानाविचित्राश्च धर्म्मश्रवणपूजा आज्ञापयितव्या ॥ अचिन्तिया अतुल्यया प्रीत्या आत्मानं सन्तर्पयितव्या । अचिन्तनप्रीतिसुखेन सुखापयितव्यं सुखेन्द्रियेन च भवितव्यं ॥ आत्मनश्च महाबलेन च भवितव्यं महता प्रहर्षणात्मा प्रहर्षयितव्यः ॥ महताभिसजातेन धर्म्मभाणकः प्रत्युद्गातव्यः ॥

एवमुक्ते भगवांस्तांश्चतुरोमहाराजानेतदवोचत् । तस्मिंश्च खलु पुनर्म्महाराजाः काले तस्मिन् समये तेन मनुष्यराजेन सर्व्वाणि च तानि पाण्डलानि नवरुचिरवस्त्राणि प्रावरितव्यानि नानाविभूषणालङ्कारैरात्मा समलङ्कर्त्तव्यः ॥ महता राजानुभावेन महत्या राजव्यूहया नानाविचित्रमङ्गलपरिगृहीतैस्ततोराजकुलादभिनिष्क्रमितव्यम् । तस्यधर्म्मभाणकस्यभिक्षोः प्रत्युद्गमनाय गन्तव्यम् ॥ तत्कस्य हेतोः ॥ यावन्ति मनुष्यराजस्तत्रपदानि भावयन्ति तावन्ति कल्पकोटिनियुतशतसहस्राणि संसारात्पराङ्मुखानि करिष्यति ॥ तावतां चक्रवर्त्तिराजकुलकोटिनियुतशतसहस्राणां लाभी भविष्यति ॥ यावन्ति स तत्र पदान्यतिक्रमिष्यति । तावतां चैव दृष्टधार्म्मिकानां दुर्व्विच्छिन्नं महता राजैश्वर्य्येण विवर्द्धिष्यते ॥ अनेककल्पकोटिनियुतशतसहस्राणामुदारोदाराणां चावस्थानानां सप्तरत्नमयानां दिव्यविमानानां लाभी भविष्यति ॥ अनेकेषां च दिव्योदाराणां मानुष्यकानां राजपुत्रशतसहस्राणां लाभी भविष्यति ॥ सर्व्वत्र जातिषु महैश्वर्य्यप्राप्तो भविष्यति ॥ दीर्घायुष्कश्च भविष्यति चिरजीवी च भविष्यति । प्रतिभाणवांश्चादेयवचनश्च यशस्वी च सुविशालकीर्त्तिश्च प्रशंसनीयश्च भविष्यति सदेवमानुषासुरस्य लोकस्य सुखितश्च भविष्यति ॥ उदारोदाराणां च दिव्यमानुष्यकानां सुखानां लाभी भविष्यति ॥ महाबलश्च महानग्नबलवेगधारी चाभिरूपः प्रासादिको दर्शनीयः परमया शुभवर्णपुष्करतया समन्वागतश्च भविष्यति ॥ सर्व्वत्र च जातिषु तथागतसमवधानगतो भविष्यति ॥ सर्व्वकल्याणमित्राणि च प्रतिलप्स्यते ॥ योऽपरिमितपुण्यस्कन्धपरिगृहीतो भविष्यति ॥ इमान्येवं रूपाणि महाराजगुणानुशंसानि संपश्यमानेन तेन राज्ञा धर्म्मभाणका

धर्मश्रवणाभ्युत्थानाय्याः ॥ तत्र धर्मभाणकस्यान्तिके शास्तृसंज्ञोत्पादयितव्या ॥ एवं चित्त-
मुत्पादयितव्यं ॥ अद्य मम शाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्ध इह राजकुले स्वजनमनुप्रा-
विष्यति ॥ सर्वलोकविप्रत्यनीकं धर्मश्रवणं श्रोष्यामि ॥ अद्याहमनेन धर्मश्रवणेनावैवर्तिको
भविष्याम्यनुत्तरायां सम्यक् सम्बोधौ ॥ अद्य मया तथागतकोटिनियुतशतसहस्राण्या-
रागितानि भविष्यन्ति ॥ अद्य मयातीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतामचिन्त्या महती
विपुला विस्तीर्णा पूजा कृता भविष्यति ॥ अद्य मम नरकगतितिर्यग्योनियमलोक-
दुःखान्यत्यन्तशः समुच्छिन्नानि भविष्यन्ति ॥ अद्य मयानेकानां ब्रह्मेन्द्रराजत्वकोटिनियुत-
शतसहस्रात्मभावप्रतिलब्धानां कुशलमूलबीजान्यवहशानि भविष्यन्ति ॥ अद्य मयानेकानि
शक्रत्वकोटिनियुतशतसहस्रात्मभावप्रतिलब्धानां कुशलमूलान्यवक्रमानि भविष्यन्ति ॥ अद्य
मयानेकानि चक्रवर्त्तिराजकोटिनियुतशतसहस्रात्मभावबीजान्यवलो(रो)पितानि भविष्यन्ति ॥
अद्य मयानेकानि सत्त्वकोटिनियुतशतसहस्राणि संसाराद्विमोचितानि भविष्यन्ति ॥ अद्य
मयाचिन्त्यसुविपुले छनिष्यसि त्वं सत्पुरुषानुत्तरं धर्मप्रवाद्यं ॥ आपूरयिष्यसि त्वं सत्पुरु-
षानुत्तरधर्मशङ्खं । उच्छ्रयिष्यसि त्वं सत्पुरुष महाधर्मध्वजं ॥ प्रज्वालयिष्यसि त्वं सत्पुरु-
षानुत्तरां धर्मोल्कां प्रवर्षयिष्यसि त्वं सत्पुरुषानुत्तरं महाधर्मवर्षं पराजयिष्यसि त्वं स-
त्पुरुषानेकानि क्लेशशतसहस्राणि प्रतारयिष्यसि त्वं सत्पुरुषानेकानि सत्त्वकोटिनियुतशत-
सहस्राणि सुभीमान्महाभयसमुद्रात् ॥ परिमोचयिष्यसि त्वं सत्पुरुषानेकानि सत्त्वकोटि-
नियुतशतसहस्राणि संसारचक्रात् ॥ आरागयिष्यसि त्वं सत्पुरुषानेकानि तथागतकोटि-
नियुतशतसहस्राणि तथाधर्मोक्तं प्रत्युद्गृह्य ॥ येनैवासौ मनुष्यराजः पुण्याभिसंस्कारेण
कुशलाभिसंस्कारेण च तेनैव चात्मभावेन च दृष्टधार्मिकेणाचिन्त्येन महताराज्यैश्वर्यतां
विवर्धयिष्यति ॥ दृष्टधार्मिकेणाचिन्त्येन महता च राजतेजसा समन्वागतो भविष्यति ॥ श्रिया
च तेजसा च लक्ष्म्या चालङ्कृतो भविष्यति ॥ सर्वप्रत्यर्थिकाश्च सर्वशत्रवश्च सहधर्मेण
सुनिगृहीता भविष्यन्ति ॥

एवमुक्ते चत्वारो महाराजा भगवन्तमेतदवोचन् ॥ यः कश्चिद्भदन्त भगवन्मनुष्यराजो
भवेत् ॥ सोऽनेनैवं बु(बुद्ध)भूषणधर्मगौरवेणेमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं शृणुयात् ॥ तांश्च
सूत्रेन्द्रधारका भिक्षुभिक्षुण्युपासकोपासिकाः संस्कुर्यात् गुरुकुर्यान्मानयेत् पूजयेत् ॥ अस्माकं
चतुर्णां महाराजानामर्थाय तद्राजकुलं सुशोधितं शोधयेत् ॥ नानागन्धोदकसंसिक्तं कुर्यात् ॥
तस्य धर्मश्रवणसकाशाच्चतुर्भिश्च महाराजैः सार्द्धं साधारणं शृणुयादात्मनोऽर्थाय स च तावत्
किञ्चिन्मात्रं कुशलं प्रत्यंशं दद्यात् ॥ समनन्तरे निषण्णस्य च भदन्त भगवं तस्य भिक्षोर्धर्मा-
सनगतस्य ॥ तेन मनुष्यराजेनास्माकं चतुर्णां महाराजानामर्थाय नानागन्धा धूपयितव्या
सहधूपितेषु ते भदन्त भगवंस्तस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य पूजार्थाय नानागन्धेषु
परेता निश्चरन्ति ॥ तस्मिन्नेव क्षणलवमुहूर्तेऽस्माकं चतुर्णां महाराजानां स्वकस्वकभवन
गतान्युपर्यन्तरीक्षे नानागन्धधूपलताच्छत्राणि संस्थास्यन्ति ॥ उदारांश्च गन्धानाघ्रास्यन्ति ।
सुवर्णवर्णमयाश्चावभासाः प्रादुर्भविष्यन्ति ॥ तेनचावभासेनास्माकं भवनान्यवभासितानि
भविष्यन्ति ॥ ब्रह्मणः सहापतेः शक्रस्य च देवानामिन्द्रेण सरस्वत्याश्च महादेव्या दृढा

महादेव्याः श्रियश्च महादेव्याः संञ्जयस्य महायक्षसेनापतेरष्टाविंशतीनां च महायक्षसेनापतीनां महेश्वरस्य च देवपुत्रस्य वज्रपाणेश्च महायक्षसेनापतेर्मणिभद्रस्य च महायक्षसेनापतेर्हारीत्याश्च पञ्चपुत्रशतपरिवाराद्याः। अनवतप्तस्य च नागराजस्य चैतेषां भदन्त भगवन् स्वकस्वकभवनगतानां तेन क्षणलवमुहूर्त्तेनापर्य्यन्तरीदे नानागन्धधूपजलताच्छत्राणि संस्थास्यन्ति॥ उदाराश्च नानागन्धानाघ्रास्यन्ति सुवर्णवर्णमयाश्चावभासाः प्रादुर्भविष्यन्ति॥ तया चावभासया सर्व्वभवनान्येव भासितानि भविष्यन्ति॥

एवमुक्ते भगवांश्चतुरो महाराजानेतदवोचत्॥ न केवलं युष्माकं चतूर्णां महाराजानां स्वकस्वकभवनगतानामपर्य्यन्तरीक्षगतानि नानागन्धधूपरताच्छत्राणि संस्थास्यन्ति॥ तत् कस्य हेतोः॥ सहप्रधूपिताश्च महाराजास्तेन मनुष्यराजेन नानागन्धा अस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य पूजोपस्थानाय तत्क्षणेवधूपकूटव्यूहस्तं परिगृहीता नानागन्धधूपरता निश्चरिष्यन्ति॥ तेन क्षणलवमुहूर्त्तेन सर्व्वस्यां त्रिसाहस्रमहासाहस्रायां लोकधातौ यत्र कोटिशतं सुमेरूणां पर्व्वतराजानां कोटिशतं चक्रवाड़महाचक्रवाडानां पर्व्वतराजानां कोटिशतं चतुर्महाद्वीपानां कोटिशतं चतुर्महाराजकायिकानां देवानां कोटिशतं त्रयंस्त्रिंशानां देवानां कोटिशतं यावन्नैव संज्ञा नासंज्ञायतनोपगानां सर्व्वत्र रतेषु त्रिसाहस्रमहासाहस्रलोकधातुकोटिशतेषु, त्रयस्त्रिंशेषु देवनिकायेषु सर्व्वेषां च देवनरगन्धर्व्वासुरगरुड़किन्नरमहोरगानां च भवनगतानां चोपर्य्यन्तरीक्षगतानि नानागन्धधूपलताच्छत्राणि संस्थास्यन्ति॥ उदारांश्च नानागन्धानाघ्रास्यन्ति सुवर्णवर्णमयाश्चावभासाः प्रादुर्भविष्यन्ति ताभिश्चावभासाभिः सर्व्वभवनान्येव भासितानि भविष्यन्ति॥

एवमुक्ते चत्वारो महाराजा भगवन्तमेतदवोचत्। अस्य भदन्त भगवन् सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य तान्येव रूपाणि वृधार्म्मिकानि सारं पराजयिष्यामि कानि च गुणानि संपश्यमानस्य बुद्धसहस्रावरुप्तकुशलमूलस्य मनुष्यराजस्यानुकम्पाचापरिमितपुण्यस्कन्धपरिग्रहं सम्पश्यमानास्ते वयं भदन्त भगवन् चत्वारो महाराजाः स्वपरिवारा अनेकैर्यक्षशतसहस्रैः सार्द्धं स्वभवनगता नानागन्धधूपलताच्छत्राः संचोदिताः समाना अदृश्यैरात्मभावै र्येन तस्य मनुष्यराजस्याप्रगतसंस्कारकूटसुशोधितं नानागन्धोदकसुषिक्तं नानालङ्कारसमलङ्कृतं राजकुलं तेनोपसंक्रमिष्यामो धर्म्मश्रवणाय ब्रह्मा च सहापतिः शक्रश्च देवानामिन्द्रः सरस्वती च महादेवी श्रीश्च महादेवी दृढा च महादेवी पृथिवी देवता संजयश्च महायक्षसेनापतिरष्टाविंशतिमहायक्षसेनापतयश्च महेश्वरश्च देवपुत्रो वज्रपाणिश्च गुह्यकाधिपतिर्मणिभद्रश्च महायक्षसेनापतिः हारीती च पञ्चपुत्रशतपरिवारा अनवतप्तश्च नागराजः सागरश्च नागराजः। अनेकानि च देवकोटिनियुतशतसहस्राणि अदृश्यैरात्मभावैर्येन तस्य मनुष्यराजस्य यत्र तं नानालङ्कारसमलङ्कृतं राजकुलं यत्र तस्य धर्म्मभाणकस्य भिक्षोः युष्माभिः कौशेयां धरण्यां शौचप्रगृहीतं नानालङ्कारसमलङ्कृतं धर्म्मासनं प्रज्ञप्तं तत्र धर्म्मश्रवणाय ते वयं भदन्त भगवंश्चत्वारो महाराजा अनेकैर्यक्षशतसहस्रैरेभिश्च सर्व्वैः सार्द्धं समग्रा भविष्यामः तस्य मनुष्यराजस्य कल्याणमित्रसहायकस्य कल्याणमित्रसंप्रापकस्यानुत्तरस्य महारसोदारदातुः। अनेन धर्म्मामृतरसेन संतर्पिताः सन्तः तस्य

तत् कस्य हेतोः । यद्भदन्त भगवंस्तेन मनुष्यराजेनावश्यमयं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः श्रोतव्यः । यावन्ति भदन्त भगवन् ब्रह्मेन्द्रेण लौकिकलोकोत्तरेण च नानाविधानि शास्त्राणि उपदर्शितानि । यावन्ति च शक्रेण देवेन्द्रेण नानाविधानि शास्त्राणि उपदर्शितानि । यावन्ति च नानाविधैः पञ्चाभिज्ञैः ऋषिभिः लौकिकलोकोत्तराणि च सत्त्वानामर्थाय शास्त्राण्युपदेशितानि । भदन्त भगवंस्तुल्या ब्रह्मेन्द्रशतसहस्र अनेकेभ्यश्च शक्रकोटिनियुतशतसहस्रेभ्यः सर्व्वेभ्यश्च पञ्चाभिज्ञेभ्य अशीतिकोटिनियुतशतसहस्रशस्तथागतोऽग्रतरश्च वेशिष्टतरश्चेमं सुवर्णप्रभासोत्तम-सूत्रेन्द्रराजविस्तरेण सत्त्वानामर्थाय संप्रकाशयितः । यथायं सर्व्वजम्बुद्वीपगतानां मनुष्यराजानां राजत्वं कारयितव्यं । यथा च सर्व्वसत्त्वानि सुखार्पितानि भवन्ति । यथा च सर्व्वविषयानुत्पीड़िताश्च भविष्यन्ति अकण्टकाः । यथा परचक्राणि पराजितानि भविष्यन्ति यथा सुखीभूतानि यथा च ते विषया अनुपायासाश्च यथा च सर्व्वविषयधर्म्मा अनुपायासाश्च भविष्यन्ति । अनुपद्रुताश्च यथा च तैर्मनुष्यराजैः स्वेषु स्वेषु विषयेषु महती धर्म्मोल्का प्रज्वलिता भविष्यति । आदीपिताश्च यथा च सर्व्वदेवता-भवनान्यादीपितानि भविष्यन्ति देवैर्देवपुत्रैश्च । यथा च वयं चत्वारो महाराजाः सबलपरिवारा अनेकानि यक्षशतसहस्राणि सर्व्वजम्बुद्वीपगताश्च देवगणाः सन्तर्पिता भविष्यन्ति संप्रसादिताश्च । यथाचास्माकं काये महान्तं वीर्य्यबलं च स्थामं रसं च संजनितं भविष्यति । यथा चास्माकं काये तेजश्च श्रीश्च लक्ष्मीश्च भूयस्या मात्रयाभिनिविशति । यथा च सर्व्वजम्बुद्वीपे यः सुभिक्षो भविष्यति रमणीयश्च बहुजनाकीर्णमनुष्यश्च यथा च सर्व्वजम्बुद्वीपगतानि सत्त्वानि सुखितानि भविष्यन्ति नानारतिमनुभविष्यन्ति । यथा च सत्त्वान्यनेककल्पकोटिनियुतशतसहस्राणि अचिन्त्यान्युदारोदाराणि सुखान्यनुभविष्यन्ति । बुद्धैश्च भगवद्भिः सार्द्धं समवधानगतानि भविष्यन्ति अनागतेऽध्वन्यनुत्तरां सम्यक् सम्बोधिमभिसम्भोत्स्यन्ते । तत् सर्व्वमेतर्हि भगवता तथागतेनार्हता सम्यक्सम्बुद्धेन महता कारुण्यबलाधिष्ठानेन शक्रकोटिनियुत शतसहस्राणि दिव्यातिरेकतरतथागतज्ञाने नानाविधानेकसर्व्वपञ्चाभिज्ञर्षिगणकोटिनियुतशतसहस्राणि चैकसम्यक्सम्बुद्धेन ब्रह्मेन्द्रकोटिनियुतशतसहस्राणिचैकब्रततयाधिष्ठानेन स भगवता तथागतेनार्हता सम्यक्सम्बुद्धेनायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजो विस्तरेण सर्व्वसत्त्वानामर्थायेह जम्बुद्वीपे संप्रकाशितः तेन मनुष्यराजेन सर्व्वजम्बुद्वीपगतानि लौकिकलोकोत्तराणि राजकार्य्याणि राजशास्त्राणि राजकरणानि निर्य्यातानि ॥

यैरिमे सत्त्वाः सुखिता भविष्यन्ति । तानि सर्व्वाणि भगवता तथागतेनार्हता सम्यक्सम्बुद्धेनायं सुवर्णप्रभासोत्तमसूत्रेन्द्रराज उपदर्शितः परिदीपितः संप्रकाशितः । तेन भदन्त भगवन् हेतुना प्रत्ययेन तेन मनुष्यराजेनावश्यमयं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः सत्कृत्य श्रोतव्यः सत्कृत्य संमानयितव्यः सत्कृत्य संपूजयितव्यः । एवमुक्ते भगवांश्चतुरो महाराजानेतदवोचत् ॥

तेन हि चत्वारो महाराजाः सबलपरिवाराः । अवश्यं तेषां मनुष्यराज्ञोऽस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य श्रोतॄणां पूजयितॄणां महान्तमौत्सुक्यं करिष्यसि रक्षां यथैताश्च

महाराजाः सूत्रेन्द्रधारका भिक्षुभिक्षुण्युपासकोपासिका बुद्धक्षेत्रमारात् प्रदर्शन्ते। देवमानुषासुरस्य लोकस्य बुद्धकृत्यानि करिष्यन्ति। इमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं विस्तरेण संप्रकाशयिष्यन्ति। अवश्यं युष्माभिश्चतुर्भिर्महाराजैस्तेषां सूत्रेन्द्रधारकाणां भिक्षुभिक्षुण्युपासकोपासिकानामारक्षा कर्त्तव्या परिपालनं परित्राणं परिग्रहं दण्डपरिहारं शान्तिस्वस्त्ययनं कर्त्तव्यम्। यथा च सूत्रेन्द्रधारका भिक्षुभिक्षुण्युपासकोपासिका आरक्षिता भवेयुः। अनुत्पीडिता अनुपसर्गायासाः सुखचित्ताः। इमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं विस्तरेण सत्त्वानां संप्रकाशयितुम्॥

अथ खलु वैश्रवणो महाराजो धृतराष्ट्रो महाराजो विरूढको महाराजो विरूपाक्षो महाराज उत्थायासनेभ्य एकांशानि चीवराणि प्रावृत्योत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य तस्यां वेलायामभिमुखं सारूपाभिर्गाथाभिर्भगवन्तमभितुष्टुवुः॥

जिनचन्द्र-विमलचन्द्र-जिनसूर्य्यसहस्रकिरणाभं
जिनकमलविमलाभनेत्रं।
जिनकुमुदमृणालविरजदशनाग्रं
जिनगुणसागरकल्प अनेकरत्नाकर जिनसमुद्रं॥

ज्ञानाम्बुसलिलपूर्णसमाधिशतसहस्रकीर्णं
जिनचरणचक्रचित्रं समन्तनेमिं तथागतसहस्राभं।
कलेवरजालचलितं हंसेन्द्र यथा चरणजालं
काञ्चनगिरिप्रकाशं सुवर्णवर्णं कनकामलं॥

जिनं गिरीन्द्रं सर्व्वगुणमेरुकल्पं
बुद्धगिरीन्द्रचन्द्रं जिनं नमस्यामः आकाशतुल्यं।
चन्द्रसदृशं देवचन्द्रनिभं तथागतशशाङ्कं
मायामरीचिकल्पसमं सुविमलजिनं नमस्यामः॥

अथ खलु भगवांश्चतुरो महाराजान् गाथाभिरभाषे। अयं सूत्रेन्द्रराजप्रवरः सुवर्णप्रभासोत्तमः दशबलानां युष्माभिर्लोकपालैः पालयितव्यम्। येनायं सूत्ररत्नं गम्भीरः सर्व्वसत्त्वसुखदाता सत्त्वानां हितसुखार्थं चिरस्य प्रवर्तेत्। जम्बुद्वीपेऽस्मिन् येन त्रिसाहस्रिकायां लोकधातौ हि सत्त्वा अपायदुःखं समेति सत्त्वा नारकदुःखानि ये चेह जम्बुद्वीपगता हि सर्व्व-

राजानः। सहृष्टाः प्रहर्षजाता धर्मेण च पालयन्तु विषयाणि। ये चत्वारो धर्मभाणकस्य भिक्षोः सहानुबद्धा भविष्यामि तं धर्मभाणकं माननाय परिपालनाय चेति ॥

## इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजचतुर्महाराजपरिवर्त्तो नाम सप्तमः ॥

---

अथ खलु सरस्वती महादेवी एकांशे चीवरं प्रावृत्य दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। अहमपि भदन्त भगवन् सरस्वती महादेवी तस्य धर्मभाणकभिक्षोर्वाक्यविभूषणार्थाय प्रतिभाणकमुपसंहरिष्यामि। धारणीश्चानुप्रदास्यामि सुनिरुक्तवचनानां भावं सम्भावयिष्यामि। महान्तं च धर्मभाणकस्य भिक्षोर्ज्ञानावभासं करिष्यामि। यानि कानिचित् पदव्यञ्जनानि इतः सुवर्णप्रभासोत्तम-सूत्रेन्द्रराजान्परिभ्रष्टानि भविष्यन्ति। विस्मरितानि च तान्यहं सर्व्वाणि तस्य धर्मभाणकस्य भिक्षोः सुनिरुक्तपदव्यञ्जनान्युपसंहरिष्यामि। धारणीं चानुप्रदास्यामि स्मृत्यसंप्रमोषणाय। यथा चायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः तेषां बुद्धसहस्रावरोपितकुशलमूलानामर्थाय चिरं जम्बुद्वीपे प्रवरेत्। न च क्षिप्रमन्तर्धापयेत्। अनेकानि च सत्त्वानि च सत्त्वानि इमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं श्रुत्वा अचिन्त्यतीक्ष्णप्रज्ञा भवेयुः। नानाशिल्पविधिज्ञाश्च तदिदं संयुक्तं स्नानकर्म भाषिष्यामि तस्य धर्मभाणकस्य भिक्षोस्तेषां च धर्मश्रवणिकानां सत्त्वानामर्थाय। सर्व्वग्रहनक्षत्रजन्ममरणपीड़ाः कलिकलहकलुषडिम्बतामरदुःस्वप्नविषयक-पीड़ाः सर्व्वकार्त्तदेवतापीड़ाः प्रशमं यास्यन्ति॥ औषधाय मन्त्राय येन स्नायोऽपयन्ति च पण्डिताः॥

> यवागोरोचनापृक्का शौरिषसाम्यकसमौ।
> इन्द्रहस्ता महाभागा व्यामकं अगुरुत्वचम्॥
> नीचेष्टकं सर्ज्जरसं शिङ्गुकी गुग्गुरसम्।
> तगरं यत्र शैलेयं चन्दनं मनःशिला समाः॥

नायं जम्बुद्वीपः समस्त भवेत्। सुभिक्षो रमणीयः। सर्व्वत्र जम्बुद्वीपे सुखितानि भवन्ति सर्व्वसत्त्वानि।

> यस्य नास्ति नरपते-
> विषयप्रियतात्मसौख्यप्रियता च राजत्वं।
> ऐश्वर्य्यप्रियता च श्रोतव्यस्तेन
> सूत्रेन्द्रियं परमेश्वरसंचयकरम्॥

परचक्रनिवर्त्तनकरः
शुभकरश्च परमभयव्यसनहरः ।
परमशुभकरोऽयं सूत्रेन्द्रराजः
यथार्त्तः रुचिरः सर्व्वगुणसम्भवः सुगटहसंस्थः ॥

तथैवायं सूत्रेन्द्रराजो
द्रष्टव्यो राजगुणादीनां ।
यथा शीतलहिमसलिलं
घर्मतः प्रतिलभते तृष्णापहरणम् ॥

तथैवायं सूत्रवरेन्द्रो
गुणसुखदाता भवेत् ।
नरपतीनां यथैव हि
रत्नकरण्डः सर्व्वरत्नाकरः ॥

करस्थवस्तु तथैवायं
सूत्रेन्द्रराजः सुवर्णप्रभासोत्तमो नृपगणानाम् ।
देवगणाभ्यर्चितोऽयं
देवेन्द्रेण नमस्कृतश्च सूत्रेन्द्रः ॥

आरचितश्चतुर्भिर्महर्द्धिकैर्लोकपालैः
युद्धे हि दशदिशश्च सदा समन्वाहृतोऽयं सूत्रेन्द्रः ।
सूत्रमिदं देशयत साधुकारं ददन्ति सम्बुद्धाः
षट्शतसहस्राणि रचन्ति विषये दशसुदिशासु ॥

शृण्वन्ति सूत्रेन्द्रमिदं प्रमुदितचित्ताः प्रहृष्टाश्च
जम्बुद्वीपगतानि विविक्तानि देवगणानि ।
ते सर्व्वे देवगणाः शृण्वन्तु सूत्रमिदं प्रमुदिताश्च
तेजोबलं वीर्य्यबलं लभन्तु तेन धर्मश्रवणेन ॥

महतौजसा च देवकायान् विवर्द्धयिष्यन्ति ।

अथ खलु चत्वारो महाराजा भगवतोऽन्तिकादिमा गाथाः श्रुत्वाश्चर्य्यप्राप्ता बभूवुः अद्भुतप्राप्ता उद्विग्नप्राप्तास्तद्धर्म्मवेगेन मुहूर्त्तमात्रं प्रमुदिता इवाश्रूणि च प्रवर्त्तयामासुः। ते च संमानैः शरीरैः प्रहर्षिभिरङ्गप्रत्यङ्गैरचिन्त्येन प्रीतिसुखसौमनस्येन समन्वागतो भूत्वा पुनरपि भगवन्तं दिव्यमान्दारवकुसुमैरवकिरन्ति स्म। अवकिरित्वा प्रकिरित्वोत्थायासनेभ्य एकांशानि चीवराणि प्रावरित्वा दक्षिणानि जानुमण्डलानि पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् ॥

योऽयं मयि भगवन् भदन्त चत्वारो महाराजा एकैको महाराजः पञ्च पञ्च यक्षशतपरिवारं तुरुस्कञ्च कुङ्कुमं सुष्टसर्षपाः। नरदञ्च श्यसूक्ष्मला उशीरन्नागकेशलं। एतानि समभागानि पुष्यनक्षत्रेण पीषयेत्। इमैर्मन्त्रपदैश्चूर्णं शतधा वाभिमन्त्रयेत्। तद्यथा। सुकृते करजातभागे। हंसरण्डे इन्द्रजामलिसके उपसदे अवताषिके कुत्र कुकविकले विमले मतिशीले मतिसन्धिबुध्मवति शिशिरि सम्यक्षिते स्वाहा।

गोमयेन मण्डलकं कृत्वा मुक्तपुष्पाणि स्थापयेत्। सुवर्णखण्डे पुष्पभाण्डे मधुरेण स्थापयेत्। धर्म्मे तानि च पुरुषाणि चत्वारि तत्र स्थापयेत् ॥

कन्याः सुभूषिताः न्यस्ताश्चत्वारो घटधारिण्यः।
गुग्गुलं धूपयेन्नित्यं पञ्चतूर्य्याणि योजयेत् ॥

छत्रध्वज-पताकैश्च तां देवीं समलङ्कृतां।
आदर्शन-पदाचैश्च शरशक्तीनि योजयेत् ॥

सीमाबन्धां ततः कुर्य्यात् पश्चात्कार्यं समालभेत्।
अनेनमन्त्रपदक्रमेण सीमाबन्धं समारभेत् ॥

स्याद्यथेदम्। अकेन येन हिलि हिलि गिले खिले स्वाहा। भगवतः पृष्ठतः स्नात्वा अनेन मन्त्रजापेन स्नानशान्तिं योजयेत्। तद्यथा। सुगतविगतविगतावति स्वाहा।

नक्षत्रायुः पालयन्तु चतुर्दिशे नक्षत्रजन्मपीड़ा वा राशि कर्म्म भयावहं। धातुसंक्षोभसमुद्भूताः शाम्यन्तु भयदारुणा समविषमे स्वाहा।

।*। १ सुगताय स्वाहा।*। सागरसम्भूताय स्वाहा।*। स्कन्धमासत्ताय स्वाहा।*। १ नीलकण्ठाय स्वाहा।*। १ पराजिताय वीर्य्याय स्वाहा।*। १ हिमवत्सम्भूताय स्वाहा।*। अनिमिषचक्राय स्वाहा।*। नमो भगवत्यै ब्राह्मण्यै नमः। सरस्वत्यै सिध्यन्तु मन्त्रपदा त्वं ब्रह्मणे शाम्यन्तु स्वाहा।*।

एतेन स्नानकर्म्मणा तस्य धर्म्मभाणकस्य भिक्षोरर्थाय तेषां च धर्म्मश्रवणिकानां लेखकानामर्थाय स्वयमेवाहं तत्र गगनस्थितये देवगणैः सार्द्धम्। तत्र च ग्रामे वा नगरे वा निगमे वा विहारे वा सर्व्वतो रागे प्रशमनं करिष्यामि। सर्व्वग्रहकलिकलुषनक्षत्रजन्मपीड़ा

वा दुःखं स्वप्नविनायकपीड़ां सर्व्वकार्खादेयतापीड़ां प्रशमयिष्यामि। यथा तेषां सूत्रेन्द्रधारकानां भिक्षुभिक्षुण्युपासकोपासिकानां जीवितानुग्रहो भवेत्। संसारनिर्व्वाणं च प्रतिलभेयुः। अवैवर्त्तिकाश्च भवेयुरनुत्तरायाः सम्यक् सम्बोधेः।

अथ खलु भगवान् सरस्वत्यै देव्यै साधुकारमदात्।

१ साधु साधु सरस्वति महादेवि बहुजनहिताय बहुजनसुखाय प्रतिपन्नो यत्त्वया ह्रीमानि मन्त्रोषधीनि संयुक्तानि। सा च सरस्वती महादेवी भगवतः पादाभिवन्दनं कृत्वा एकान्ते निषण्णा।

अथ खल्वार्य्यव्याकरणकौण्डिल्यो महाब्राह्मणः तां सरस्वतीमावाहयति स्म। सरस्वती महादेवी पूजनीया महत्तया विख्याता सर्व्वलोकेषु वरहस्ता महागुणशिखरसमाश्रिता कान्ता उद्भववरवासिनी। शुभवस्त्रं धारयति एकयाहे न तिष्ठति सर्व्वदेवाः समागम्यतां। सूत्रवचनं त्विदं जिह्वाविमुखं च सत्त्वानां भाषन्तु वचनं शुभं। स्वाद्यथेदं। सुरवीर अरज अरजावति हिगुले पिंगले पिंगलवति सुखमरीचि सुमति दिशमति। अग्रीमग्री जले वितले च वुड़िविचौरीमरिनियाश्रयलोके ह्यष्टके प्रियसिद्धव्रतभीमसुखितशवीवरी। अयति हेतु अयति हेतुबुद्धि नमुचिमुचि महादेवी प्रतिगृह्णे नमस्कारं सर्व्वसत्त्वानां बुद्धिरप्रतिहता भवन्तु विद्या मे सिध्यन्तु शास्त्रलोके तन्त्रपिटककाव्यादिषु।

तद्यथा। महाप्रभावे हिलि हिलि मिलि विचरतु मम विचरन्तु मे मायाः सर्व्वसत्त्वानां भगवत्या देव्याः सरस्वत्या अनुभावेन कदारके युवति हिलि मिलि हिलि आवाहयामि महादेवीं बुद्धसत्येन धर्म्मसत्येन संघसत्येन इन्द्रसत्येन वरुणसत्येन ये लोकसत्यवादिनः सन्ति तेन तेषां सत्यवचनेन आवाहयामि महादेवीं। हिलि हिलि मिलि विचलन्तु मम मन्त्रिनो माया सर्व्वसत्त्वानाम्।

*नमो भगवत्यै सरस्वत्यै सिध्यन्तु मन्त्रपदाः स्वाहा।* *।

अथाचार्य्यो व्याकरणकौण्डिल्यो महाब्राह्मणः सरस्वतीं महादेवीमिमाभिर्गाथाभिरभ्यष्टावीत्।

शृण्वन्तु मे भूतगणा हि सर्व्वे
स्तोष्यामि देवीं प्रवरोत्तमचारुवक्त्रां।
जामातृपासे प्रवरोत्तमाये
देवीमदेवगन्धर्व्वसुरेन्द्रलोके॥

नानाविचित्रगुणममलङ्कृताङ्गा
सरस्वती नाम विशालनेत्रा।
पुण्योज्ज्वला विमलज्ञानगुणैर्विकीर्णा
नानाविचित्ररत्नोत्तमदर्शनीया॥

स्तोष्यामि तां प्रवरराज्यगुणैर्विशिष्टैः
सिद्धिकराग्र्यै प्रवरोत्तमायै ।
प्रशस्तभूतायै गुणकरायै
विमलोत्तमायै कमलोज्ज्वलायै ॥

सुलोचनायै नयनोत्तमायै
शुभाश्रयायै शुभदेशनायै ।
गुणैरचिन्त्यैः समलङ्कृतायै
चन्द्रोपमायै विमलप्रभायै ॥

ज्ञानाकरायै स्मृतिसमेयतायै
सिद्धोत्तमायै नरवाह(णा)नायै ।
रत्नमणिवाङ्गसमलङ्कृतायै
पूर्णशशाङ्कोपमदर्शनायै ॥

मनोज्ञवाच्यायै मृदुस्वरायै
गम्भीरप्रज्ञोपसमन्वितायै ।
कार्य्यार्थसाधनकरायै
सुसत्त्वकायै देवासुरैरभिपूजितायै ॥

सर्व्वसुरासुरगणालयचण्डितायै
भूतगणैः सदासं पूजितायै नमः स्वाहा ॥

अहं देवीं नमस्यामि सा मे प्रयच्छतु गुणौघं,
सर्व्वसत्त्वानां विशिष्टां सिद्धिं प्रददातु सर्व्वकार्य्याणि ॥
नित्यंच रक्षतु मां सर्व्वसत्त्वांश्च शत्रुमध्ये ।

स्तोष्यामि तां प्रवरराज्यगुणैर्विशिष्टैः
सिद्धिकराद्ये प्रवरोत्तमायै ।
प्रशस्तभूतायै गुणकरायै
विमलोत्तमायै कमलोज्ज्वलायै ॥

सुलोचनायै नयनोत्तमायै
शुभाश्रयायै शुभदेशनायै ।
गुणैरचिन्त्यैः समलङ्कृतायै
चन्द्रोपमायै विमलप्रभायै ॥

ज्ञानाकरायै स्मृतिसमेगतायै
सिद्धोत्तमायै नरवाह(णा)नायै ।
रत्नमणिवाङ्कसमलङ्कृतायै
पूर्णशशाङ्कोपमदर्शनायै ॥

मनोज्ञवाच्यायै मृदुस्वरायै
गम्भीरप्रज्ञोपसमन्वितायै ।
कार्य्याग्रसाधनकरायै
सुसत्त्वकायै देवासुरैरभिपूजितायै ॥

सर्व्वसुरासुरगणालयवण्डितायै
भूतगणैः सदासं पूजितायै नमः स्वाहा ॥

अहं देवीं नमस्यामि सा मे प्रयच्छतु गुणौघं,
सर्व्वसत्त्वानां विशिष्टां सिद्धिं प्रददातु सर्व्वकार्य्याणि ॥
नित्यंच रक्षतु मां सर्व्वसत्त्वांश्च शत्रुमध्ये ।

सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य नामधेयमुच्चारयितव्यं। तान् सत्त्वांश्श्रीमहादेवी समन्वाहरिष्यति। तेषां च महतीं श्रियं करिष्यति। अडकवत्यां राजधान्यां पुण्यकुसुमप्रभानामोद्याने वने सुवर्णध्वजनाम्नि सप्तरत्नयुक्तभवने श्रीमहादेवी प्रतिवसति स्म। यः कश्चित् पुरुषो धान्यराशिं विवर्द्धयितुकामो भवेत्। तेन शोधयितव्यं। शुचिश्वेतवस्त्रप्रावृतेन सुगन्धवसनधारिणा भवितव्यं। नमस्तस्य भगवतो रत्नकुसुमगुणसागरवैडूर्यकनकगिरिसुवर्णकाञ्चनप्रभासश्रियस्तथागतस्यार्हतः सम्यक्सम्बुद्धस्य त्रिष्कृत्वा नामधेयमुच्चारयितव्यं। श्रिया देव्या इत्तेन तस्य पूजा कर्त्तव्या। पुष्पधूपगन्धाश्च दातव्याः नानारसविहाराश्च निर्त्तिमध्याः। तस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्यानुभावेन तेन कालेन श्रीमहादेवी तस्य गृहं समन्वाहरिष्यति। तस्य महान्तं धान्यराशिं विवर्द्धयिष्यति। तेन श्रीमहादेवीमावाहयितुकामेन इमे विद्यामन्त्राः स्मारयितव्याः ॥ * ॥

तद्यथा। नमः सर्व्वबुद्धानामतीतानागतप्रत्युत्पन्नानां। नमः सर्व्वबुद्धबोधिसत्त्वानां। नमो मैत्रेयप्रमुखानां बोधिसत्त्वानां। तेषां नमस्कृत्येमां विद्यां प्रयोजयामि। इयमविद्या समृध्यतु। स्वाहयेदं। प्रतिपूर्णवरे समन्ते गते महाकायप्रतिप्रापये सत्त्वार्थसमतानुप्रपूरे। आयाने धर्म्मिता महाभागिनो महातेजोपसंहिते। अभिसंगृहीते। समयानुपालेना इमे मूर्द्धाभिषे धर्म्मता मन्त्रपदाः। एका शशिपदा अविसंवादेनामन्त्रपदाः। समन्तधारिभिरव समकुशलैः प्राकृतधारयमाणैः ससप्तवर्षा अष्टाङ्गोपेताः स्वयं वासिने पूर्व्वाह्णे। अपराह्णे। सर्व्वबुद्धानां भगवतां पुष्पधूपगन्धपूजां कृत्वा। आत्मनश्च सर्व्वसत्त्वानाञ्च सर्व्वज्ञानस्य परिपूरणाय तेन सर्व्वेऽभिप्रायाः समृध्यन्तु। क्षिप्रं समृध्यतु तद्गृहं। स चोक्तं कृत्वा विहारं चारण्यायतनं वा। गोमयेन मण्डलकं कृत्वा गन्धपुष्पधूपं च दातव्यं। रौक्ममासनं प्रज्ञप्तयितव्यं पुष्पावकीर्णन्तु गमितव्यं। ततस्तत्क्षणं श्रीमहादेवी प्रविशित्वा तत्र स्थास्यति। तदुपादाय तत्र गृहे वा ग्रामे वा नगरे वा निगमे वा विहारे वा अरण्यायतने वा न जातु केनचिद्वैकल्यं करिष्यति॥ हिरण्येन वा सुवर्णेन वा रत्नेन धनेन वा धान्यादिसर्व्वोपकरणसमृद्धाभिः सर्व्वसुखोपधानेन सुखितानि भविष्यन्ति। कुशलमूलञ्च यद्वृद्धिर्यते। तेन सर्व्वं श्रिया देव्याः प्रेमप्रभावप्रेषणं दातव्यं यावज्जीवं तत्रोपस्थास्यति न विलम्बिष्यति। सर्व्वाभिप्रायांश्चैषां परिपूरयिष्यतीति॥

## इति सुवर्णप्रभासोत्तमे सूत्रेन्द्रराजे श्रीमहादेवीपरिवर्त्तो

## नाम नवमः ॥ * ॥

---



नमो भगवतो रत्नशिखिनस्तथागतस्य॥ * ॥ नमः सुवर्णरत्नाकरच्छत्रकूटस्य तथागतस्य। नमः सुवर्णपुष्पज्वले रश्मिकेतोस्तथागतस्य। नमो महाप्रदीपस्य तथागतस्य। रुचिरकेतुर्नाम बोधिसत्त्वः। सुवर्णप्रभासोत्तमो नाम बोधिसत्त्वः। सुवर्णगन्धो नाम बोधिसत्त्वः। धर्मोद्गतो नाम बोधिसत्त्वः। पुरस्थिमेनाक्षभ्यो नाम तथागतः। दक्षिणेन

रत्नकेतुर्नाम तथागतः। पश्चिमेनामितायुर्नाम तथागतः। उत्तरे ... तथागतः। सुवर्णप्रभासोत्तमसूत्रेन्द्रराज इमानि बोधिसत्त्वनामानि ये ते बोधिसत्त्वा नित्यं जातिस्मरा भान्ति ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजे सर्वबुद्धबोधिसत्त्वोनाम संधारणीपरिवर्त्तो दशमः ॥ * ॥

---

अथ खलु दृढा पृथिवीदेवता भगवन्तमेतदवोचत्। अयं भदन्त भगवन् सुवर्णप्रभासोत्तमः सूत्रेन्द्रराज एतर्हि चानागतेऽध्वनि यत्र ग्रामे वा नगरे वा निगमे वा जनपदे वारण्यप्रदेशे गिरिकन्दरे वा राजकुले वा उपसंक्रमिष्यति। यत्रायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजो विस्तरेण संप्रकाशयिष्यति ॥ यत्र यत्र भगवन् पृथिवीप्रदेशे तस्य धर्मभाणकस्य भिक्षो ऋजुकायगतस्य धर्मासने प्रज्ञप्तं भविष्यति ॥ यत्र यत्रासने धर्मभाणको निषद्येमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं विस्तरेण संप्रकाशयिष्यति ॥ तत्राहं भदन्त भगवन् दृढा पृथिवीदेवता तेषु पृथिवीप्रदेशेष्वागमिष्यामि ॥ अत्र धर्मासनगतोऽस्मि अदृश्यमानेनात्म-भावेनोत्तमाङ्गेन च तस्य धर्मभाणकस्य भिक्षोः पादतलौ प्रतिसंहरिष्यामि। आत्मानं चानेन धर्मश्रवणेन धर्मामृतरसेन संतर्पयिष्यामि। संप्रतिमानयिष्यामि संपूजयिष्यामि। आत्मानं च संतर्पयित्वा प्रतिमानयित्वा संप्रहर्षयित्वा ॥ इममष्टषष्टियोजनसहस्राणि पृथिवीस्कन्धं आत्मानं चानेन धर्मश्रवणेन धर्मामृतरसेन यावद्वोजमयं पृथिवीत(ल)रसमुपादाय पृथिवीरसेन विवर्द्धयिष्यामि ॥ संप्रतिमानयिष्यामि परिपूरयिष्यामि ॥ उपरिस्थिमं समुद्र-पर्यन्तपृथिवीजलं उपादाय पृथिवीमण्डलं स्निग्धेन पृथिवीरसेन स्नेहयिष्यामि। ओजस्वि-तरां चेमां पृथिवीं* करिष्यामि। येनास्मिन् जम्बुद्वीपे नानातृणगुल्मौषधिवनस्पतय ओजस्वितराः प्ररोहयिष्यन्ति ॥ सर्वारामवनवृक्षाः शस्यानि च नानाविधानि ओजस्वि-तराणि भविष्यन्ति ॥ गन्धवर्णतराणि स्निग्धतराणि आस्वादनीयानि दर्शनीयतराणि महोत्तराणि च भविष्यन्ति ॥ ते च सत्त्वानि पानभोजनानि नानाविधानि उपभुज्य ॥ आपूर्व(ब)लवर्णेन्द्रियाणि विवर्द्धयिष्यन्ति। तेजोबलवर्णरूपसमन्वागताश्च भूत्वा नाना विधानि पृथिवीगतानि अनेकानि कार्यशतसहस्राणि करिष्यन्ति ॥ उत्थास्यन्ति व्यापारि-ष्यन्ति बलकरणीयानि कर्माणि करिष्यन्ति। तेन हेतुना भदन्त भगवन् सर्वजम्बुद्वीपः क्षेमश्च भविष्यन्ति। सुभिक्षश्च स्फीतश्चर्द्धश्च रमणीयश्च बहुजनाकीर्णमनुष्यश्च भविष्यति ॥

सर्वजम्बुद्वीपे च सत्त्वानि सुखितानि भ... नानाविचित्रां रतिमनुभवि-ष्यन्ति। तानि सत्त्वानि तेजो...वर्णरूपसमन्वागता... । अथ सुवर्णप्रभासो-

---

* पृथिवीं करिष्यामीति ६

समस्य सूत्रेन्द्रराजस्यार्थाय तेषां सूत्रेन्द्रधारकानां भिक्षुभिक्षुण्युपासकोपासिकानां धर्मासनगतानामन्तिके*मुपसंक्रमेयुः। उपसंक्रमित्वा तानि प्रसन्नचित्तानि सर्व्वसत्त्वानामर्थाय हिताय सुखाय तान् धर्म्मभाणकानध्येषयेयुः। अथ सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य प्रकाशतः। अहं दृढा पृथिवीदेवता सपरिवारा ओजस्वितरा भविष्यामि। तेन भदन्त भगवंस्तावत्काले काये महाबलवीर्य्यस्थामसंजनितं भविष्यति॥ तेजश्च श्रीश्च लक्ष्मीश्चास्माकं कायमाविशन्ति। मयि च भदन्त भगवन् दृढायां पृथिवीदेवतायां अनेन धर्म्मामृतरसेन सन्तर्पितायां महातेजोबलवीर्य्यस्थामवेगप्रतिलब्धायां। अयं महापृथिवीसप्तयोजनसाहस्रिकायां जम्बुद्वीपो महता पृथिवीरसेन विवर्द्धयिष्यति। ओजस्वितरा च महापृथिवी भविष्यति।

इमानि च भदन्त भगवन् सर्व्वसत्त्वानि पृथिवीसन्निश्रितानि वृद्धिविरूढिवैपुल्यतां च गमिष्यन्ति महान्ति च भविष्यन्ति महान्ति च भूत्वा सर्व्वसत्त्वानि पृथिवीगतानि नानोपभोगपरिभोगानुपभोक्ष्यन्ति सुखानि चानुभविष्यन्ति। तानि च सर्व्वाणि नानाविचित्रान्नपानभक्ष्यवस्त्रशयनासनवसनभवनविमानोद्याननदीपुष्करिण्युत्ससरोह्रदतडागादीनि† इमान्येवरूपाणि नानाविधान्युपकरणसुखानि पृथिवीसंश्रितानि पृथिव्यां प्रादुर्भूतानि पृथिव्यां प्रतिष्ठितानि उपभुञ्जन्तु‡॥ तेन भदन्त भगवन् हेतुना सर्व्वसत्त्वैरस्माकं कृतज्ञता कर्त्तव्या॥ अवश्यमयं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः सत्कृत्य श्रोतव्यः सत्कर्त्तव्यो गुरुकर्त्तव्यो मानयितव्यः पूजयितव्यः। यदा च भदन्त भगवंस्ते सर्व्वे सत्त्वा नानाकुलेभ्यो नानागृहेभ्यो निष्क्रमेयुस्तेषां धर्म्मभाणकानामुपसंक्रमणाय। उपसंक्रम्य चेमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं शृणुयुः। श्रुत्वा च पुनरेव ते सत्त्वा स्वकस्वकेषु नानाकुलेषु गृहग्रामेषु प्रविष्टाः स्वगृहगताः परस्परेणैवं कथयेयुः। गम्भीरोऽस्माभिरद्य श्रवणः श्रुतः अचिन्त्योऽस्माभिरद्य पुण्यस्कन्धः परिगृहीतः। येन धर्म्मश्रवणेन नरकान् प्रतिमुक्ताः स्मः। तिर्य्यग्योनि यमलोके प्रेतविषयापरिमुक्ता अद्यास्माभिः।

अनेन धर्म्मश्रवणेनानागतेऽध्वन्यनेकेषु जातिशतसहस्रेषु देवमनुष्योपपत्तिपरिगृहीता भविष्यन्ति॥ तेन च नानागृहगता भूत्वान्येषां सत्त्वानां इतः सुवर्णप्रभासोत्तमात् सूत्रेन्द्रराजादन्तश एकदृष्टान्तमप्यारोचयेयुः एकेन एकपरिवर्त्तस्य वा एकपूर्व्वयोगस्य वा। अन्तशश्चतुःष्पादिकामपीं गाथामन्तश एकपदमपि सुवर्णप्रभासोत्तमात् सूत्रेन्द्रराजादन्येषां सत्त्वानां संश्रावयेयुरन्तशः सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य नामधेयमपि परेषां सत्त्वानां संश्रावयेयुः यत्र यत्र भदन्त भगवंस्तानि नानाविधानि सत्त्वानि नानाविधेषु पृथिवीप्रदेशेषु। इमान्येवं रूपाणि नानाविधानि सूत्रान्तहेतूनि परस्परेणारोचयेयुः संश्रावयेयुश्च कथासम्बन्धं च कुर्व्वीरन्। सर्व्वत्र भदन्त भगवन् पृथिवीप्रदेशा ओजस्वितरा च भविष्यन्ति स्निग्धतराश्च। सर्व्वेषां सत्त्वानां तेषु तेषु पृथिवीप्रदेशेषु नानाविधानि पृथिवीरसानि सर्व्वोपकरणानि भूयिष्ठतर-

---

* अन्तिकमुपसंक्रमेयुरिति पाठो युक्तः।

† अत्र तडागादीनि इवं पाठो भवितुमर्हति।

‡ अत्र उपभुञ्जन्तु इति पाठम्।

सुपपत्स्यन्ते विवर्द्धिष्यन्ते वैपुल्यतां गमिष्यन्ति। सर्व्वाणि तानि सत्त्वानि महाधनानि महाभोगानि च दानाधिमुक्तानि च भविष्यन्ति त्रिषु रत्नेषु अभिप्रसन्नानि भविष्यन्ति ॥

एवमुक्ते भगवान् दृढां पृथिवीदेवतामेतदवोचत्। ये केचित् पृथिवीदेवतसत्त्वा इतः सुवर्णप्रभासोत्तमात् सूत्रेन्द्रराजादन्तश एकपदमपि शृणुयुस्ते त इतो मनुष्यकाच्चावित्वा त्रयस्त्रिंशत्सु देवनिकायेषु अनुत्तरानुत्तरेषु देवनिकायेषु येषूपपत्स्यन्ते। ये केचित् पृथिवीदेवतसत्त्वा अस्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्यार्थाय तानि स्थानानि समलङ्कुर्व्वीरन्। अन्तश एकछत्त्रस्त्वा एकपताकस्त्वा एकदुष्यस्त्वा समलङ्कृतानि च देवतास्थानानि। तेषु सप्तसु कामावचरेषु देवनिकायेषु सप्तरत्नमयानि दिव्यानि विमानानि सर्व्वालङ्कारसमलङ्कृतानि संस्थास्यन्ति। ते सत्त्वा इतो मनुष्यलोकाच्चावित्वा तेषु सप्तरत्नमयेषु दिव्यविमानेषूपपत्स्यन्ते ते चैकैकस्मिन् पृथिवीदेवतसप्तरत्नमये दिव्यविमाने सप्तवारानुपपत्स्यन्ते अचिन्त्यानि दिव्यानि सुखानि प्रत्यनुभविष्यन्ति ॥

एवमुक्ते दृढा पृथिवीदेवता भगवन्तमेतदवोचत्। तेनाहं भदन्त भगवन् दृढा पृथिवीदेवता तस्य धर्म्मभाणकस्य भिक्षोर्धर्म्मासनगतस्य तेषु पृथिवीप्रदेशेष्वावसिष्यामि। अदृश्यमानेनात्मभावेन तस्य धर्म्मभाणकस्य भिक्षोरुत्तमाङ्गेन पादतलौ प्रतिसंहरिष्यामि। यथाप्ययं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजस्तेषां बुद्धसहस्रावरोपितकुशलमूलानां सत्त्वानामर्थाय चिरं जम्बूद्वीपे प्रचरेत्। न च क्षिप्रमन्तर्धापयेत्। सत्त्वानि चेमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं शृणुयुः। अनागतेऽध्वन्यनेकानि कल्पकोटिनियुतशतसहस्राणि अचिन्त्यानि दिव्यमानुष्यकानि सुखानि अनुभवेयुः। तथागतसमवधानगतानि च भवेयुः। अनागतेऽध्वन्यनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयुः। सर्व्वनरकतिर्य्यग्योनियमलोकदुःखानि चात्यन्तसमुच्छिन्नानि भवेयुरिति ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजे दृढा पृथिवीदेवता परिवर्त्तोनामैकादशः ॥ * ॥

---

अथ खलु सञ्जयोनाम महायक्षसेनापतिरष्टाविंशतिभिर्म्महायक्षसेनापतिभिः सार्द्धमुत्थायासनादेकांशचीवरं प्रावृत्य दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्।

अयं भदन्त भगवन् सुवर्णप्रभासोत्तमः सूत्रेन्द्रराज एतर्हि चानागतेऽध्वनि यत्र ग्रामे वा नगरे वा निगमे वा जनपदे वा जनपदप्रदेशे वारण्यायतने वा गिरिकन्दरे वा राजकुले वा गृहे वा प्रचरिष्यति। तत्राहं भदन्त भगवन् सञ्जयोनाम सेनापतिः सार्द्धमष्टाविंशतिभिर्म्महासेनापतिभिः। तत्र ग्रामे वा नगरे वा जनपदे वारण्ये वा गिरिकन्दरे वा राजकुले वा उपसंक्रमिष्यामि। अदृश्यमानेनात्मभावेन तस्य धर्म्मभाणकस्य भिक्षो रक्षां करिष्यामि। परित्राणं परिग्रहं परिपालनं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं करिष्यामि। तेषां

च सर्व्वेषां धर्म्मश्रवणिकानां स्त्रीपुरुषदारकदारिकाणां येषां केषां विदितः सुवर्णप्रभासोत्तमात् सूत्रेन्द्रराजादन्तश एका चतुष्पादिका अपि गाथा श्रुता भवेत् अन्तश एकपदमपि सुवर्णप्रभासोत्तमात् सूत्रेन्द्रराजादेकबोधिसत्त्वनामधेयमपि श्रुतं भवेत्। उद्गृहीतं वा एकतथागतनामधेयं वा अन्तशश्चास्य सुवर्णप्रभासोत्तमस्य सूत्रेन्द्रराजस्य नामधेयं श्रुतं भवेत्॥ उद्गृहीता वा तेषां सर्व्वेषामारक्षां करिष्यामि॥ परिग्रहं परिपालनं परित्राणं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं च करिष्यामि। तेषां च कुलानां तेषां च गृहाणां तेषां च नगराणां तेषां च ग्रामाणां तेषां च निगमानां तेषां चारण्यानां तेषां राजकुलानामारक्षां करिष्यामि परित्राणं परिग्रहं परिपालनं दण्डपरिहारं शस्त्रपरिहारं शान्तिस्वस्त्ययनं करिष्यामि।

तत्कतमेन हेतुना। सर्व्वधर्म्माः परिज्ञाताः सर्व्वधर्म्मा अवबुद्धाः। यावन्तश्च सर्व्वधर्म्माः। यथा च सर्व्वधर्म्माः। संस्थिता ये च सर्व्वधर्म्माः। सम्यगवज्ञाताश्च सर्व्वधर्म्माः। सर्व्वधर्म्मेष्वहं भदन्त भगवन् प्रत्युक्तः। अचिन्त्या ये भदन्त भगवन् ज्ञानावभासाः। अचिन्त्यो ज्ञानालोकः। अचिन्त्यो ज्ञानस्कन्धः। अचिन्त्यो मे भदन्त भगवन् सर्व्वधर्म्मेषु ज्ञानविषयः प्रवर्त्तते। यथा च मे भदन्त भगवन् सर्व्वधर्म्माः सम्यग्ज्ञाताः सम्यक्परीक्षिताः सम्यक्परिज्ञाताः। सम्यग्व्यवलोकिताः सम्यगवबुद्धाः॥ तेन हेतुना मम भदन्त सञ्जयस्य महायक्षसेनापतेः सञ्जय इति नामधेयं समुदयो हि अहं भदन्त भगवन् धर्मभाणकस्य भिक्षोर्वाक्यविभूषणायापि प्रतिभानमुपसंहरिष्यामि। ग्रामान्तरेषु तस्योजः प्रक्षेप्स्यामि। महान्तं च तस्य स्थाम च बलं च वीर्यञ्च काये संजनयिष्यामि अचिन्त्यं तस्य ज्ञानावभासं करिष्यामि। स्मृतिं च तस्य बोधयिष्यामि। महान्तं च तस्योत्साहं दास्यामि। यथा च स धर्मभाणको न क्लान्तकायो भवेत्। सुखेन्द्रियकायो भवेत् प्रहर्षजातश्च भवेत्। येनायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजस्तेषां बुद्धशतसहस्रावरोपितकुशलमूलानां सत्त्वानामर्थाय चिरं जम्बूद्वीपे प्रचरेत्। न च क्षिप्रमन्तर्धापयेत्। सत्त्वाश्चेमं सुवर्णप्रभासोत्तमं सूत्रेन्द्रराजं शृणुयुः। अचिन्त्यं च ज्ञानस्कन्धं प्रतिलभेयुः। प्रज्ञावन्तश्च भवेयुरपरिमितं च पुण्यस्कन्धं परिगृह्णीयुः। अनागतेऽध्वन्यनेकैः कल्पकोटिनियुतशतसहस्राण्यचिन्त्यानि दिव्यमानुष्यकाणि सुखान्यनुभवेयुः। तथागतसमवधानगताश्च भवेयुरनागतेऽध्वन्यनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येरन्। सर्व्वनरकतिर्य्यग्योनियमलोकदुःखानि चात्यन्तं न समुच्छिन्नानि भवेयुरिति॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजे संजयपरिवर्त्तो नाम

द्वादशः॥

---

नमस्तस्य भगवतो रत्नकुसुमगुणसागरवैडूर्यकनकगिरिसुवर्णकाञ्चनप्रभासश्रियस्तथागतस्यार्हतः सम्यक्सम्बुद्धस्य नमस्तस्यानेकगुणकोटिनियुतशतसहस्रसमलङ्कृतशरीरस्य शाक्यमुनेस्तथागतस्य यस्येयं धर्मोल्का ज्वलति। नमस्तस्या अपरिमितपुण्यैः धर्मसमन्वागतायाः श्रिया महादेव्याः नमस्तस्या अपरिमितगुणप्रज्ञासमुदितायाः सरस्वत्याः। तेन

खलु पुनः कालेन तेन समयेन राजा बलेन्द्रकेतुः पुत्रस्य रुचिरकेतो रुचिराभिषिक्तस्य च राज्यप्रतिष्ठितस्यैतदवोचत् ॥

अस्ति पुत्र देवेन्द्रसमयं नाम राजशास्त्रं यन्मया पूर्व्वमचिराभिषिक्तेन च राज्य-प्रतिष्ठितेन च । पितुराज्ञा वरेन्द्रकेतोः सकाशादुद्गृहीतं । तेन मया देवेन्द्र समयेन राजशास्त्रेण विंशतिवर्षसहस्राणि राजत्वं कारितं बभूव । नाभिजानाम्यहमन्तशः । एकचित्तक्षण-प्रमाणमात्रेणापि कस्यचिदधर्मैस्थितपूर्व्वं । कतमत्तत्र देवेन्द्रसमयं नाम राजशास्त्रं ।

अथ खलु कुलदेवतराजा बलेन्द्रकेतुः तेन कालेन तेन समयेन पुत्रस्य राज्ञो रुचिरकेतोरिमाभिर्गाथाभिर्देवेन्द्रसमयं नाम राजशास्त्रं विस्तरेण संप्रकाशयति ।

राजशास्त्रं प्रवक्ष्यामि सर्व्वसत्त्वहितङ्करं ।
सर्व्वसंशयच्छेत्तारं सर्व्वदुष्कृतनाशनम् ॥

हृष्टचित्ता भवन्तीह सर्व्वे नृपतयः पृथक् ।
सर्व्वदेवेन्द्रसमयं शृणुध्वं प्राञ्जलीकृताः ॥

वज्रप्राकारगिरीन्द्रेऽस्मिन् देवेन्द्राणां समागमैः ।
उत्थिता लोकपालैर्भिर्ब्रह्मेन्द्रपरिपृच्छया ॥

त्वं नः सुरगुरुर्ब्रह्मा देवतानां त्वमीश्वरः ।
छेत्ता त्वं संशयानां च छिन्धयास्माकं नः संशयम् ॥

कथं मनुष्यसम्भूतो राजा देवः स प्रोच्यते ।
यदिह मानुष्यलोके जायते च भवं नृपः ॥

कथं देवमनुष्येषु राजत्वं च करिष्यति ।
एवं हि लोकपालैर्भिर्ब्रह्मेन्द्रः परिपृच्छितः ॥

सर्व्वं सुरगुरुर्ब्रह्मा लोकपालानिहाब्रवीत् ।
यदिह लोकपालैभिरेतर्हि मम पृच्छितः ॥

सर्व्वसत्त्वहितार्थाय वक्ष्येऽहं शास्त्रमुत्तमं ।
नारीणां सम्भवं वक्ष्ये युक्तोऽहं मनुजालये ॥

हेतुना येन राजानो भवन्ति विषयेषु च।
देवेन्द्राणामधिष्ठाने मातुः कुक्षौ प्रवेक्ष्यति॥

पूर्वमधिष्ठितो देवैः पश्चाद्गर्भाः* प्रपद्यते।
किं चापि मानुषे लोके जायते मृ(म्रि)यते नृपः॥

अपि चैव देवसम्भूतो देवपुत्रः स उच्यते।
त्रयस्त्रिंश देवराजेन्द्रैर्भागो दत्तो नृपस्य हि॥

पुत्रत्वं सह देवानां निर्म्मितो मनुजेश्वरः।
अधर्म्मशमनार्थाय दुष्कृतानां निवारकः॥

सुकृतौ स्थापयेत् सत्त्वान् प्रहर्षार्थं सुरालये।
मनुष्यो वाथ देवो वा ...... नराधिपः॥

राक्षसो वाथ चण्डालो दुष्कृतानां निवारकः।
माता पिता वा नृपतिः सुकृतौ कर्म्मकारिणाम्॥

विपाकफलदर्शी च देवराज अधिष्ठितः।
सुकृतदुष्कृतानां च कर्म्मणां दृष्टधार्म्मिकः॥

विपाकफलदर्शित्वं देवराजमधिष्ठितं।
यदा ह्युपेक्षते राजा दुष्कृतं विषये स्थितं॥

नानारूपं न कुर्व्वीत दण्डं पापजनस्य च।
दुष्कृतानामुपेक्षाया अधर्म्मो वर्द्धते भृशं॥

शाठ्यानि कलहाश्चैव भूयो राष्ट्रे भवन्ति च।
प्रकुप्यन्ति च देवेन्द्रास्त्रयस्त्रिंशभवनेषु च॥

* अत्र गर्भः प्रपद्यते इति पाठः साधुः।

यदा ह्युपेचते राजा दुष्कृतं विषये स्थितम् ।
हन्यते विषयो घोरैः शाठ्यैरपि सुदारुणैः ॥

विनश्यन्ति तदा राष्ट्रे परचक्रस्य वा क्रमात् ।
भोगानि च वस्त्राण्येवन्धनं यस्यास्ति भक्षितं ॥

विविधानि च शस्त्राणि हरन्ति च परस्परम् ।
येन कार्येण राजत्वमेतत्कार्यं करिष्यति ॥

विलोपयति स्वं राष्ट्रं गजेन्द्र इव पद्मिनीम् ।
विषमा वायवो वान्ति विषमा जलवृष्टयः ॥

विषमा ग्रहनक्षत्राश्चन्द्रसूर्यौ तथैव च ।
शस्यं पुष्पं फलं बीजं न सम्यक् परिसु(प)च्यते ॥

दुर्भिक्षं भवते तत्र यत्र राजाह्युपेचकः ।
अनात्तमनसा देवा भवन्ति भवनेषु च ॥

यदा ह्युपेचते राजा दुष्कृतं विषये स्थितम् ।
ते सर्वे देवराजाश्च वच्यन्ति च परस्परं ॥

अधार्मिको ह्ययं राजा ह्यधर्मपक्षमाश्रितः ।
न चिरेण ह्ययं राजा देवताः कोपयिष्यति ॥

देवतानां परिकोपाद्विषयोऽस्य विनंक्ष्यति ।
शस्त्रेण नास्य धर्मस्य विषये च(ऽ)च भविष्यति ॥

मायानां कलहानां च रोगाणां च समुद्भवः ।
प्रकुप्यति च देवेन्द्र उपेक्ष्यन्ति च देवताः ॥

प्रणश्यते च तद्राष्ट्रं स नृपः शोकमृच्छति ।
इष्टवियोगं प्राप्नोति भ्राता वाथ सुतेन वा ॥

प्रियभार्य्यावियोगो वा म्रीयते दुहिताथ वा ।
उल्कापाता भविष्यन्ति प्रतिसूर्य्यास्तथैव च ॥

परचक्रभयं चापि दुर्भिक्षं वर्द्धते भृशं ।
प्रियामाभ्यास म्रियते दुःप्रियस्तु गर्ज्जते वरः ॥

सुताभीष्टं प्रियाश्चाशंकरा भार्य्याविरोधिनः ।
परस्परं हरिष्यन्ति कुलभागधनानि च ॥

देशे देशे हनिष्यन्ति शस्त्रेण च परस्परं ।
विवादाः कलहाशाला भवन्ति विषयेषु च ॥

यद्धः प्रविशते राष्ट्रे व्याधिभिर्भवन्ति दारुणः* ।
अधार्म्मिका भविष्यन्ति दक्षिणीयास्तदन्तरम् ॥

अमात्याः परिषदश्चैवभवन्त्यस्याप्यधार्म्मिकाः ।
अधार्म्मिकजने पूजा भविष्यति तदन्तरम् ॥

धार्म्मिकानां च सत्त्वानां निग्रहो भवति ध्रुवं ।
अधार्म्मिकजने सम्मानं धार्म्मिकानां च निग्रहम्† ॥

त्रयस्तत्र प्रकुप्यन्तो‡ नक्षत्रजलवायवः ।
त्रयो भावा विनश्यन्ति अधार्म्मिकजनोद्भवे ॥

सद्धर्म्मरसनोजश्च सत्त्वोजः पृथिवीरसः ।
असभ्यजनसम्मानं सभ्यजने विमानता§ ॥

---

* परैः प्रविश्यते राष्ट्रं व्याधयो भान्ति दारुणाः । इति पाठो युक्तः ।

† अधार्म्मिके च सम्मानो धार्म्मिकानां च निग्रहः । एवं पाठः समीचीनतया प्रतिभाति ।

‡ अत्र प्रकुप्यन्ति इति पाठः गृह्यते छन्दोऽनुरोधाद्व्याकरणस्यानुरोधाच्च ।

§ असभ्यजनसम्मानः सभ्ये चैव विमानना इत्ययं पाठः प्रयोक्तव्यः ।

क्षयस्तत्र भविष्यन्ति दुर्भिक्षमशनिर्भरं ।
फलशस्यरसौजश्च न भवन्ति तदन्तरे ॥

ग्लानेन बहुलाः सत्त्वा भवन्ति विषयेषु च ।
मधुराणि महान्ति च निष्फलानि विषयेऽपि* हि ॥

परिताश्च भविष्यन्ति तिक्तकटुक एव च ।
पूर्व्वरम्याणि भावानि क्रीड़ाहास्यरतीनि च ॥

सभा रम्या भविष्यन्ति आयासा शतव्याकुलाः ।
शस्यानां च फलानां च स्निग्धभावं रसं क्षपेत् ॥

न तथा प्रीणयिष्यन्ति शरीरेन्द्रियधावतः† ।
दुर्वर्णसत्त्वा‡ भविष्यन्ति स्वल्पस्थामाः सुदुर्व्वलाः ॥

बहु च भोजनं भुक्त्वा तृप्तिं नासादयन्ति ते ।
बलं च वीर्य्यं स्थामं च न लभन्ति तदन्तरे ॥

हीनवीर्य्याणि सत्त्वानि भवन्ति विषयेषु च ।
सत्त्वा§ भविष्यन्ति रोगार्त्ता नानाव्याधिप्रपीड़िताः ॥

यक्षा भविष्यन्ति नक्षत्रा नानाराक्षससंभवाः ।
अधार्म्मिको भवेद्राजा अधर्म्मपक्षसंस्थितः ॥

त्रैधातुके विरुध्यन्ति सर्व्वत्रैलोक्यमण्डलं ।
अनेके हीदृशा दोषा भवन्ति विषयेषु च ॥

---

* मधुराणि महान्ति च विषये निष्फलानि हि । एवं पाठो युक्तः ।

† अत्र शरीरेन्द्रियधातवः इति पाठः संगच्छते ।

‡ भाष्यन्ति इति पाठे कल्पिते छन्दोभङ्गदोषपरिहारः स्यात् ।

§ अत्रापि भाष्यन्ति इति क्रिया कल्पनीया छन्दोऽनुरोधात् ।

यदा पचस्थितो राजा दुष्कृतं समुपेक्षते ।
येन कार्य्येण राजा वै देवेन्द्रैरधिष्ठितः ॥

न तत्करोति राजत्वं दुष्कृतं समुपेक्षतः ।
सुकृता नोपपद्यन्ते सर्व्वदेवसुरालये ॥

दुष्कृतेन(च) गच्छन्ति प्रेततिर्य्यग्नरकेषु च ।
त्रयस्त्रिंशद्देवभवनात् प्रपातयति दुष्कृतात् ॥

यदा ह्युपेक्षते राजा दुष्कृतं विषये स्थितं ।
पितॄणां देवराजानां भवते साध्यनाधिकः* ॥

न तद्भवति पुत्रत्वं न राजत्वं कृतं भवेत् ।
यदापि लभ्यते कार्य्यं शाठ्यैरपि सुदारुणैः ॥

तस्मादधिकृतो राजा देवेन्द्रैर्मनुजालये ।
दुष्कृतानां शमनार्थायां सुकृतानां प्रवर्त्तकः ॥

‡दृष्टधार्म्मिकं सत्त्वानां विपाकजनको नृपः ।
सुकृतदुष्कृतानां च कर्म्मणां यः पृथग्विधः ॥

विवाकफलदानार्थं§ कर्त्ता राजा हि प्रोच्यते ।
अधिष्ठितो देवगणैर्देवेन्द्रैरनुमोदिता ॥

आत्मनोऽर्थे परार्थाय धर्म्मार्थं विषयस्य च ।
दमनार्थाय राष्ट्रेषु शमनाय जनस्य च ॥

---

* अत्र साध्यनाधिक इति पाठः सन्दिग्धः ।

† शमनाय दुष्कृतानां इति पाठः सङ्गतः ।

‡ दृष्टधार्म्मिक इति अनुस्वारविरहिते पदे प्रयुक्ते सति छन्दोभङ्गप्रमादनिरासः स्यात् ।

§ विपाककलदानार्थमिति पाठम् ।

त्यजेच्च जीवितं राज्यं धर्मार्थं विषयस्य च ।
मात्वाधर्ममपृच्छित्वा जानन्दं समुपेक्षते ॥

न चान्यस्तादृशो नाशो विषयेऽस्मिन् सुदारुणः ।
यथाशाठ्यसमुत्पन्ने शाठ्यकान्तारनिग्रहः ॥

भूयो भवन्ति शाठ्यानि विषयेऽस्मिन् सुदारुणैः ।
विलुप्यते च तद्राष्ट्रं गजैरिव महासरः ॥

प्रकुप्यन्ति देवेन्द्रा विरुप्यन्ते सुरालयम्* ।
विषमाः सर्वभावा (हि) भवन्ति विषमस्य हि ॥

तस्माद्दोषानुरूपं स्यात् कुर्य्याद्दमकपापकारिणाम् ।
धर्मेण पालयेद्राष्ट्रं मात्वाधर्मं समाचरेत् ॥

जीवितं च परित्यज्य मा पापे पतितो भवेत् ।
बन्धुजने परजनेषु च सर्वराष्ट्रजनेषु चर्या ॥

एकपक्षो भवेद्राजा मा पक्षे पतितो भवेत् ।
त्रैलोक्यमापूरयते यशसा धार्म्मिको नृपः ॥

हर्षयिष्यन्ति देवेन्द्रा स्त्रयस्त्रिंशभवनेषु च ।
जम्बूद्वीपे तथास्माकं पुत्रा धर्मात्मिका नृपाः ॥

धर्मेण शास्यते राष्ट्रं सुहृते स्थाप्यते जनम् ।
सुहृते न च राजान दृष्ट प्रेषयन्ते जनम् ॥

---

* प्रकुप्यन्ति च देवेन्द्रा विरुप्यन्ते सुरालये । इति पाठः संगच्छते ।

† तस्माद्दोषानुरूपश्च दमयेत् पापकारिण 'इति पाठे छन्दोभङ्गदोषपरिहारः स्यात् ।

‡ बन्धुजने परजने सर्वराष्ट्रजनेषु च । एवं पाठः कल्पनीयः ।

देवैर्देवसुतैः पूर्णं करोति च सुरालयम् ।
धर्मेण सा(शा)स्त्रं तद्राष्ट्रं राजानः सुप्रहर्षिताः ॥

प्रसन्ना भान्ति देवेन्द्रा रक्षन्ते तं नराधिपम् ।
सम्यग् वहन्ति नक्षत्राणि चन्द्रसूर्य्यं तथैव च* ॥

कालेन वायवो वान्ति काले चैवं प्रवर्षति ।
सुभिक्षं कुर्वते राष्ट्रे तथा देवसुरालये ॥

अमरामरपुत्रेण पूर्णं भाति सुरालयम् ।
तस्माद्राज्यं नरपतिः प्रियं जीवत आत्मनः† ॥

आवर्त्तयेद्धर्मरत्नं येन लोकः सुखी भवेत् ।
धार्मिकीं जनयेत्सेवां या गुणैः समलङ्कृता ॥

स नित्यं सेवते तुष्टां सदा पापविवर्ज्जितः ।
धर्मेण पालयेद्राष्ट्रं धर्मं समनुशासयेत् ॥

सुकृते स्थापयेत् सत्वान् दुष्कृते च निवारयेत् ।
सुभिक्षं भवते राष्ट्रे धर्मी च भवते नृपः ॥

यथानुरूपं कुरुते दमेन पापकारिणाम् ।
यशस्वी भवते राजा सुखं पालयते प्रजा इति ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजे देवेन्द्रसमयं नाम
राजशास्त्रपरिवर्त्तस्त्रयोदशः ॥

* वहन्ति सम्यङ्नक्षत्राणि चन्द्रसूर्य्यौ तथैव च । इति पाठः सुन्दरः ।

† प्रियं जीवितमात्मन इति पाठः साधुः ।

ससागरा त्यक्तवसुन्धरा तदा
यदा बभूव नृपचक्रवर्त्ती ।
चत्वारि द्वीपानि सरत्नपूर्णा
निर्यातिता पूर्वजिनेषु सध्यम् ॥

नचास्ति तद्वर्णप्रियं मनापं
पूर्वं च मध्यं न च त्यक्तमासीत् ।
तं धर्मकायं परिमार्गणार्थं
प्रियजीवितं त्यक्तमनेककल्पान् ॥

यथापूर्वकल्पेषु अचिन्तियेषु
रत्नशिखस्य सुगतस्य शासने ।
परिनिर्वृतस्य सुगतस्य तस्य
सुसम्भवो नाम बभूव राजा ॥

स चक्रवर्त्ती चतुर्द्वीप ईश्वरः
समुद्रपर्य्यन्तमही प्रशास्यते ।
जिनेन्द्रघोषाय च राजधानीये
सुप्तो बभूव तद राजकुञ्जरः ॥

स्वप्नान्तरे बुद्धगुणांश्च श्रुत्वा
रत्नोच्चयं पश्यति धर्मभाणकम् ।
स्थितं सूर्य्यमध्ये च विरोचमानं
प्रकाशयन्तमिमसूत्रराजम् ॥

स्वप्नाद्विबुद्धश्च बभूव राजा
प्रीतिस्फुटं सर्व्वशरीरमस्य ।
अभिनिष्क्रमे राजकुलानि दृष्ट*
उपसङ्क्रमी श्रावकसङ्घमध्यम् ॥

---

* दृष्ट्वा इति पाठः संगच्छते ।

करोति पूजां जिनश्रावकानां
 रत्नोच्चये पृच्छति धर्म्मभाणकम् ।
क्वचास्ति भिक्षुरिह चार्य्यसङ्घः
 रत्नोच्चयो नाम गुणान्वितश्च ॥

तेनान्तरे रत्नोच्चयो हि भिक्षु
 रन्यत्र गुहान्तरे संनिषण्णः ।
विचित्ररत्नं इमु सूत्रराजं
 स्वाध्यायमानः सुखसंनिषण्णः ॥

दर्शेतिराजस्य तदन्तरेण
 रत्नोच्चयं भिक्षु स धर्म्मभाणकः ।
र(अ)न्यत्र गुहान्तरसन्निषण्णं
 तं तेन लक्ष्मीश्रि(श्रि)यया ज्वलन्तम् ॥

एषोऽत्र रत्नोच्चयधर्म्मभाणको
 धारेतिगम्भीरजिनस्य गोचरम् ।
सुवर्णप्रभासोत्तमसूत्ररत्नं
 सूत्रेन्द्रराजं सततं प्रकाशयेत् ॥

वन्दित्वं पादौ रतनोच्चयस्य
 सुसम्भवो राज इदं ब्रवीति ।
देशे हि मे पूर्णशशाङ्कवक्त्रे
 सुवर्णप्रभासोत्तमसूत्ररत्नम् ॥

अधिवासयि सरतनोच्चयश्च
 राजाय तस्यैव सुसम्भवस्य ।
सर्व्वंचि साहस्त्रिकलोकधातौ
 प्रहर्षिताश्चासु बभूव देवता ॥

वसुधाप्रदेशे परमे विशिष्टे
रत्नोदके गन्धजलाम्बुसिक्ते ।
पुष्पावकीर्णां धरणीं स कृत्वा
तत्रासने प्राप्य तदा नरेन्द्रः ॥

समलङ्कृतं राज तदासनं च
छत्रैर्ध्वजैर्यश्च सहस्रानेकैः ।
नानाविचित्रैर्वरपुष्पचन्द्रैः
अभ्याकिरे राज तदासनं च ॥

देवाश्च नागाश्च सकिन्नराश्च
यक्षाश्च यक्षेन्द्रमहोरगाश्च ।
दिव्यैश्च मान्दारवपुष्पवरै-
रभ्यावकिरति तदासनं च ॥

अचिन्तिया नियुतशतसहस्रकोटीयो
ये आगता देवभवाग्रकामा ।
अभिनिष्क्रमित्व रत्नोच्चयं हि
अभ्याकिरेष्यन्ति च सारपुष्पैः ॥

स चापि रत्नोच्चयधर्मभाणकः
शुभाभगात्रः शुचिवस्त्रप्रावृतः ।
उपसंक्रमित्वा तदासनं हि
कृताञ्जलि भूजनमस्यते च ॥

देवेन्द्रदेवानि च देवतानि
मान्दारवपुष्प प्रवर्षयन्ति ।
अचिन्तिया तूर्यशतसहस्राणि
प्रवादयन्ति स्थित अन्तरीक्षे ॥

अभिवन्दित्वा स सन्निषण्णो
    रत्नोच्चयो भिक्षुः सधर्मभाणकः ।
अनुस्मरित्वा दशसु दिशासु
    अचिन्तिया बुद्धसहस्रकोटीयः ॥

सर्व्वेषु सत्त्वा न कृपां जनित्वा
    कारुण्यचित्तं समुपादयन्तुः ।
राजस्य तस्यापि सुसम्भवस्य
    प्रकाशितं सूत्रमिदं तदन्तरे ॥

कृताञ्जलि भूत्व स्थिहित्व राजा
    ए कायवाचामनुमोदितेन ।
सद्धर्मवेगाश्रुप्रमुक्तनेत्रः
    प्रीतिस्फुटस्तस्य बभूव कायः ॥

इमस्य सूत्रस्य स पूजनार्थं
    सुसम्भवो राज तदन्तरेण ।
गृह्णित्व चिन्तामणिराजरत्नं
    सत्त्वार्थहेतोः प्रणिधिं चकार ॥

वर्षन्तु अद्य इह जम्बुद्वीपे
    स सप्तरत्नानि च भूषणानि ।
ये चेह सत्त्वा खलु जम्बुद्वीपे
    सुखिताय भेष्यन्ति सदाधनाय ॥

चतुर्षु द्वीपेषु प्रवर्षितानि
    सप्तानि रत्नानि तदन्तरेण ।
केयूरहारा वरकुण्डलानि
    अन्नान्नकानि वसनानि चैव ॥

दृष्ट्वा च तं राजसुसम्भवस्य
  रत्नप्रवर्षं खलु जम्बुद्वीपे ।
चत्वारि द्वीपानि सरत्नपूर्णा
  निर्यातयाम् रत्नशिखस्य शासने ॥

अहं च स शाक्यमुनिस्तथागतः
  सुसम्भवो नाम बभूव राजा ।
येनेहमभ्यक्तवसुन्धरा तदा
चत्वारि द्वीपानि सरत्नपूर्णा ॥

अक्षोभ्य आसीत् स तथागतस्य
  रत्नोच्चयो भिक्षु स धर्मभाणकः ।
येनास्य राजस्य सुसम्भवस्य
  प्रकाशितं सूत्रमिदं तदन्तरे ॥

यन्मे श्रुतं सूत्रमिदं तदा पुरा
  एकायवाचामनुमोदितं च ।
तेनैव मह्यं कुशलेन कर्मणा
  श्रोत्रानुमोदेन श्रुतेन तेन ॥

सुवर्णवर्णं शतपुण्यलक्षणं
  लभयि कायं प्रियदर्शनं सदा ।
नयनाभिरामं जनकान्तदर्शनं
  रतिङ्करं देव सहस्रकोटीनाम् ॥

न चान्तरं नवतिसहस्रकोट्यो
  कल्याणभूवं नृपचक्रवर्त्ती ।
अनेककल्पशतसहस्रान्
  यत्कोट्यराजल मयानुभूतम् ॥

अचिन्तियाकल्प बभूव शक्रः
तथैव ब्रह्मेन्द्रप्रशान्तमानसाः ।
आरागिता मे दशबलाप्रमेया
येषां प्रमाणं न कदाचि विद्यते ॥

तथा प्रमाणं बहुपुण्यस्कन्धं
यन्मे श्रुतं वानुमोदितं च यथा ।
यथाभिप्रायेमि बोधिप्राप्ता
सधर्मकायं च मया हि लब्धम् ॥ इति ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजसुसम्भवपरिवर्त्तो नाम चतु

---

यः कश्चिच्छ्रीमहादेवी तेन सार्द्धं कुलपुत्रो वा कुलदुहिता वा अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां अचिन्त्यां महतीं विपुलां विस्तीर्णां सर्व्वोपकरणैः पूजां कर्त्तुकामः स्यात् अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां गम्भीरं बुद्धगोचरं परिज्ञातुकामो भवेत् । तेनावश्यं तत्र प्रदेशे विहारे वारण्यप्रदेशे वा यथायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः प्रकाशयति । नाविक्षिप्तचित्तेनाविरहितश्रोत्रेणायं सुवर्णप्रभासोत्तमः सूत्रेन्द्रराजः श्रोतव्यः ॥ * ॥

अथ खलु भगवानिममेवार्थं भूयस्या मात्रया संपरिदीपयमानस्तस्यां वेलायामिमा गाथा अभाषत ।

य इच्छेत् सर्व्वबुद्धानां पूजां कर्त्तुमचिन्तिया ।
गम्भीरं सर्व्वबुद्धानां गोचरं च प्रजानितुम् ॥

स चरेञ्चोपसंक्रम्य विहारं क्षयनं तथा ।
यावद्देशीयते सूत्रं स्वर्णभासोत्तममिदम् ॥

अचिन्तियमिदं सूत्रं अनन्तं गुणसागरम् ।
मोचकं सर्व्वसत्त्वानामनेकदुःखसागरात् ॥

आदिसूत्रस्य पश्यामि अधर्म्मनिधनं तथा ।
अतिगम्भीरसूत्रेन्द्रं मदमानस्य न विद्यते ॥

न गङ्गारजसा चैव न धरण्या न सागरे ।
न चाम्बरतलस्यस्य किञ्चित्स्यक्योपमाहृतौ ॥

धर्म्मधातुप्रकाशेन प्रवेष्टव्यं तदन्तरम् ।
यत्र धर्म्मात्मके स्तूपं गम्भीरं सुप्रतिष्ठितम् ॥

तत्रैव भूय मध्येऽस्मिन् पश्येच्छाक्यमुनिं जिनम् ।
इदं सूत्रं प्रकाशन्तं मनोज्ञेन स्वरेण च ॥

यावन्ति कल्पकोट्यो वै असङ्ख्येया अचिन्तिया ।
दिव्यमानुष्यकाश्चैव सुखानि ह्यनुभूयते ॥

यदा स एव विजानीयाद् यत्र सूत्रं शृणीयते ।
एवमचिन्तियं मह्यं पुण्यस्कन्धं समार्ज्जितम् ॥

आक्रमेद् योजनशतं पूर्णमग्निखदाहृतम् ।
यः सकृत्श्रुणितं सूत्रं सहेत वेदनां भृशम् ॥

समन्तरप्रतिष्ठस्य विहारं लयनं तथा ।
अपगच्छति पापानि सर्व्वदुःखप्रलक्षणम् ॥

ग्रहनक्षत्रपीड़ा च काखार्द्दग्रहदारुणा ।
समनन्तरप्रविष्टस्य सर्व्वं भान्ति पराङ्मुखाः ॥

तादृशं आसनं तत्र कुर्व्वीत पद्मसन्निभम् ।
यादृशं नागराजैश्च दर्शितं सुपिनान्तरे ॥

तत्रासनोपविष्टस्य इदं सूत्रं प्रकाशयेत् ।
लिखितं वाचयेच्चैव तत्रैव पर्य्यवाप्नुयात् ॥

अवतीर्य्यासनादेव अन्यदेशे गतो भवेत् ।
दृश्यन्ते प्रतिहार्य्याणि तत्रासनगतानि च ॥

धर्म्मभाणकरूपं च कदाचित्तत्र दृश्यते ।
कदाचिद्बुद्धरूपं च बोधिसत्त्वं कदाचन ॥

समन्तभद्ररूपं च क्वचिन्मञ्जुश्रियस्तथा ।
क्वचिन्मैत्रेयरूपाणि दृश्यन्ते तत्र आसनम् ॥

क्वचित् केवलमाभासं क्वचिद्देवतदर्शनम् ।
सुहूर्त्तेनाभिदृश्यन्ते पुनस्तान्तरदायिषु ॥

सर्व्वत्र संसिद्धिकरं प्रशस्तं बुद्धशासनम् ।
धन्यं माङ्गलसम्पन्नं संग्रामे च जयावहम् ॥

जम्बूद्वीपमिदं सर्व्वं यशसापूरयिष्यति ।
सर्व्वे च रिपवस्तस्य निर्ज्जिता भान्ति सर्व्वथा ॥

निहतशत्रुः सदा भाति सर्व्वपापविवर्ज्जितः ।
सदा विजितसंग्रामः श्रिया स च प्रमोदति ॥

ब्रह्मेन्द्रास्त्रिदशेन्द्राश्च लोकपालास्तथैव च ।
वज्रपाणिश्च यक्षेन्द्रः सञ्जयश्च नरर्षभः ॥

अनवतप्तो नागेन्द्रः सागरश्च तथैव च ।
किन्नरेन्द्राःसुरेन्द्राश्च गरुडेन्द्रास्तथैव च ॥

एतांश्च प्रमुखान् कृत्वा सर्व्वाणि देवतानि च ।
देवता नित्यं पूजयन्ति धर्म्मस्तूपमचिन्तियम् ॥

प्रहर्षिता भविष्यन्ति दृष्ट्वा सत्त्वाः सगौरवाः ।
तेऽप्येवं चिन्तयिष्यन्ति देवेन्द्राः सर्व्व उत्तमाः ॥

देवताश्चैव ताः सर्व्वा वक्ष्यन्ति च परस्परम् ।
एता पश्यथ सर्व्वाणि तेजःश्रीपुण्यसञ्चिताम् ॥

एतत्कुशलमूलेन आगतास्तेन वा इह ।
य इमं सूत्रगम्भीरं श्रवणार्थमिहागताः ॥

अचिन्तियप्रसादेन धर्म्मस्तूपे सगौरवाः ।
एते कारुणिका लोके एते सत्त्वहितङ्कराः ॥

एते गम्भीरधर्म्माणां सद्धर्म्मरसभोजिनः ।
धर्म्मधातुप्रवेशेन यत्र ते प्रविशन्ति च ॥

ये शृण्वन्ति इमं सूत्रं येवान्यान् श्रावयन्ति च ।
बुद्धाः शतसहस्राणि तेभिस्ते पूर्व्वपूजिताः ॥

एतेन कुशलमूलेन इमं सूत्रं शृण्वन्ति च ।
ते सर्व्वे देवराजेन्द्राः सरस्वती तथैव च ॥

श्रीश्च वैश्रवणश्चैव तथचातुर्महाधिपाः ।
यक्षशतसहस्रेण ऋद्धिमद्भिर्महाबलैः ॥

तेषां रक्षां करिष्यन्ति दिवारात्रावतन्द्रिताः ।
महाबलेश्च यक्षेन्द्रैर्नारायणमहेश्वरौ ॥

अष्टाविंशतिश्चाप्यन्ये सञ्जयप्रमुखानि च ।
यक्षशतसहस्रेभि ऋद्धिमद्भिर्महाबलैः ॥

तेषां रक्षां करिष्यन्ति सर्व्वत्रासभयेषु च ।
वज्रपाणिश्च यक्षेन्द्रः पञ्चयक्षशतैरपि ॥

सर्व्वेभि बोधिसत्त्वेभिः तेषां रक्षां करिष्यन्ति ।
मणिभद्रश्च यक्षेन्द्रः पूर्णभद्रस्तथैव च ॥

कुम्भीराणकश्चैव पिङ्गलश्च महाबलः।
एकैकस्य यक्षेन्द्रः यं च यक्षशतैर्वृतः॥

तेषां रक्षां करिष्यन्ति एभिः सूत्रमिदं श्रुतम्।
चित्रसेनश्च गन्धर्वो जिनराजो जिनर्षभः॥

मणिकण्ठोमिकण्ठश्च वर्षाधिपतिरेव च।
महाग्रासो महाकालः स्वर्णकेशी तथैव च॥

पाञ्चिकः छगलपादेशो महाभागस्तथैव च।
शुचिरोमः सूर्यमित्रो रत्नकेशस्तथैव च॥

महाप्रशाली नकुलः कामश्रेष्ठश्च चन्दनः।
नागायशो हैमवतः सातागिरिस्तथैव च॥

सर्वे ते ऋद्धिमन्तश्च महाबलपराक्रमाः।
तेषां रक्षां करिष्यन्ति येषां सूत्रमिदं प्रियम्॥

अनवतप्तो हि नागेन्द्रः सागरोऽपि तथैव च।
मुचिलिन्दैलपत्रौ च उभौ नन्दोपनन्दकौ॥

नागशतसहस्रेभि ऋद्धिमद्भिर्महाबलैः।
तेषां रक्षां करिष्यन्ति सर्वतो भयभैरवात्॥

बली राहुर्नमुचिश्च वेमचित्रश्च संवरः।
प्रह्लादः खरस्कन्दाश्च तथान्ये चासुराधिपाः॥

असुरशतसहस्रेभि ऋद्धिमद्भिर्महाबलैः।
तेषां रक्षां करिष्यन्ति उत्पातभयभैरवात्॥

हारीती भूतमाता च पञ्चपुत्रशतैरपि।
तेषां रक्षां करिष्यन्ति सुप्रमत्तस्थितानि च॥

चण्डा चण्डालिका चैव यक्षिणी चण्डिका तथा ।
दन्ती च कुम्भदन्ती च सर्व्वसत्त्वोजहारिणी ॥

एते सर्व्वे ऋद्धिमन्तो महाबलपराक्रमाः ।
तेषां रक्षां करिष्यन्ति समन्तेन चतुर्द्दिशः ॥

सरस्वती च प्रमुखा देवता च अचिन्तिया ।
तथा सप्रमुखा चैवं सर्व्वाणि देवतानि च ॥

पृथिवीदेवता चैव फलशस्याधिदेवता ।
आरामवृक्षचैत्यानिवासिन्योनदीदेवता ॥

ते सर्व्वे देवतासंज्ञाः सुप्रहर्षितचेतसाः ।
तेषां रक्षां करिष्यन्ति येषां सूत्रमिदं प्रियं ॥

योजयन्ति च ते सत्त्वा नायुर्वर्णबलेन च ।
श्रीपुण्यतेजलक्ष्मीभिस्ते नित्यालङ्करोन्ति च ॥

ग्रहनक्षत्रपीड़ाश्च सर्व्वांस्ते शमयन्ति च ।
अलक्ष्मीपापदुःस्वप्नं सर्व्वं ते नाशयन्ति च ॥

पृथिवी देवता चैव गम्भीरा च महाबला ।
सुवर्णप्रभासोत्तमसूत्रेन्द्ररसतर्पिता ॥

अष्टषष्टिशतसहस्राणि शतानि योजनानि च ।
यावद्दीजतलस्थानं वर्द्धते पृथिवीरसैः ॥

पूर्णं च शतयोजनं पुरस्तात् सन्निवर्त्तति ।
ऊर्द्धं स्नेहयते मही इतः सूत्रश्रवणाबलात् ॥

सर्व्वाश्च देवतानि च दशदिक्षु व्यवस्थिताः ।
सुवर्णप्रभासोत्तमसूत्रेन्द्ररसतर्पिताः ॥

ओजोवन्ततरा भोन्ति लक्ष्मीवीर्य्यबलान्विताः ।
सुखेन प्रीणिता भोन्ति नानारससमर्पिता. ॥

सर्व्वत्र जम्बूद्वीपेऽस्मिन् फलशस्यवनदेवता' ।
प्रहर्षिता भविष्यन्ति इह सूत्रप्रकाशने ॥

शस्यानि तृणान्येव विचित्रकुसुमानि च ।
विचित्रा फलवृक्षाश्च रोहयन्ति समन्तत ॥

सर्व्वाणि फलवृक्षाणि आरामाणि वनानि च ।
सुपुष्पित करिष्यन्ति नानागन्धप्रमोदितम् ॥

विचित्रैभिश्च पुष्पैभिर्विचित्रैभि फलैरपि ।
सर्व्वास्तृणवनस्पत्यो रोहयन्ति महीतले ॥

सर्व्वत्र जम्बूद्वीपेऽस्मिन् नागकन्या अचिन्तिया ।
प्रहृष्टचेतसोद्भूता पद्मिनीषूपसक्रम ॥

रोहयन्ति विचित्राणि सर्व्वासु पद्मिणीषु च ।
पद्मकुमुदोत्पलानि च पुण्डरीकास्तथैव च ॥

धूमाभ्रजालिनीमुक्त भवते गगन शुभम् ।
तमोरजोविनिर्मुक्त दिशो भान्ति प्रभास्वरा ॥

सूर्य्य सहस्रकिरणैरश्मिजालेन सुप्रभ ।
गम्भीरेणावभासेन हर्षितश्चोदयिष्यति ॥

जम्बूनदसुवर्णस्य विमानान्तरसस्थित ।
सूर्य्येन्दुदेवपुत्रश्च इत सूत्रात् सुतर्पिता ॥

उदयन्ति जम्बूद्वीपे सूत्रेन्द्रसंप्रवर्त्तिताः ।
अनन्तरश्मिजालेन तौ भासतां समन्ततः ॥

सह बोधितमात्रेण रश्मिजाले प्ररोदने ।
नानापद्मिनीसंच्छन्ने कमला बोधयिष्यति ॥

सर्व्वत्र जम्बूद्वीपेऽस्मिन् नानाशस्यफलौषधीः ।
परिपाचयन्ति सम्यक् तं घातपयते नहि ॥

चन्द्रसूर्य्यौ विशेषेण अवभासतां तदन्तरम् ।
सम्यग् वहन्ति नक्षत्रा वातवर्षन्तथैव च ॥

सुभिक्षं भवते सर्व्वजम्बूद्वीपे समन्ततः ।
विशेषेण च तद्राष्ट्रं यत्र सूत्रमिदं भवेत् ॥

इति सुवर्णप्रभासोत्तमसूत्रेन्द्रराजे यक्षापरिवर्त्तो नाम पञ्चदशः ॥

